मार्गदर्शकास्तम् आथीनीनगर उपस्थापयन् पश्चाद् युवां तूर्णम् एतत् स्थानं
आगमिष्यथः सीलतिमथी प्रतीमाम् आज्ञां प्राप्य ते प्रत्यागताः।

पौल आथिनीनगरे तावपेक्ष्य तिष्ठन् तन्नगरं प्रतिमाभिः परिपूर्णं १६
दृष्ट्वा सन्तप्तहृदयो ऽभवत्। ततः स भजनभवने यान् यिहूदीयान् भक्त- १७
लोकांश्च हट्टे च यान् अपश्यत् तैः सह प्रतिदिनं विचारितवान्।
किन्त्विपिकूरेयस्तोयिकीययो र्मतग्राहिणः कियन्तो जनास्तेन सार्द्धं १८
व्यवदन्त। तत्र केचिद् अकथयन् एष वाचालः किं वक्तुम् इच्छति?
अपरे केचिद् अवदन् एष जनः कस्याश्चिद् विदेशीयाया देवतायाः
प्रचारक इत्यनुमीयते यतः स यीशोरुत्थानकथां तान् प्रति प्राचा-
रयत्। ततः परं ते तम् अरेयपागनाम विचारस्थानम् आनीय प्रावो- १९
चन् इदं यन्नवीनं मतं त्वं प्राचीकश इदं कीदृशं एतद् अस्मान् श्रावय;
यामिमाम् असम्भवकथाम् अस्माकं कर्णगोचरीकृतवान् अस्या भावार्थः २०
क इति वयं ज्ञातुम् इच्छामः। तदाथीनीनिवासिनस्तन्नगरप्रवा- २१
सिनश्च केवलं कस्याश्चन नवीनकथायाः श्रवणेन प्रचारणेन वा कालम्
अयापयन्।

अतएव पौलो ऽरेयपागस्य मध्ये तिष्ठन् एतां कथा प्रचारितवान्, २२
हे आथीनीयलोका यूयं सर्व्वथा देवपूजायाम् आसक्ता इत्यहं प्रत्यक्षं
पश्यामि। यतः पर्य्यटनकाले युष्माकं पूजनीयं पश्यन् 'अविज्ञात- २३
देवतायै' एतल्लिपियुक्तां यज्ञवेदीमेकां दृष्टवान्; अतो न विदित्वा
यं पूजयध्वे तस्यैव तत्त्वं युष्मान् प्रति प्रचारयामि। जगतो जगत्- २४
स्थानां सर्व्ववस्तूनाञ्च स्रष्टा य ईश्वरः स स्वर्गपृथिव्योरेकाधिपतिः सन् कर-
निर्म्मितमन्दिरे न निवसति; अपरं सर्व्वेभ्यो जीवनं प्राणान् सर्व्वसामग्री- २५
श्च प्रददाति; अतएव स कस्याश्चित् सामग्र्या अभावहेतो र्मनुष्याणां हस्तैः
सेवितो भवतीति न। अपरञ्च स भूमण्डले निवासार्थम् एकस्मात् शोणि- २६
तात् सर्व्वान् मनुष्यान् सृष्ट्वा तेषां पूर्व्वनिरूपितसमयं वसतिसीमाञ्च
निरचिनोत्; तस्मात् लोकैः केनापि प्रकारेण मृगयित्वा परमेश्वरस्य २७

२८ तत्त्वं प्राप्तुं तस्य गवेषणं करणीयम्। किन्तु सोऽस्माकं कस्माच्चिदपि दूरे
तिष्ठतीति नहि, वयं तेन निश्वसनप्रश्वसनगमनागमनप्राणधारणानि
कुर्म्मः पुनश्च युष्माकमेव कतिपयाः कवयः कथयन्ति 'तस्य वंशा वयं स्मो हि'
२९ इति। अतएव यदि वयम् ईश्वरस्य वंशा भवामस्तर्हि मनुष्यै र्विद्यया
कौशलेन च तक्षितं स्वर्णं रूप्यं दृषद् वैतेषामीश्वरत्वम् अस्माभि र्न ज्ञात-
३० व्यम्। अपरञ्च तेषां पूर्व्वीयलोकानाम् अज्ञानं प्रतीश्वरो यद्यपि नावा-
धत्त तथापीदानीं सर्व्वत्र सर्व्वान् मनः परिवर्त्तयितुम् आज्ञापयति
३१ यतः स्वनियुक्तेन पुरुषेण यदा स पृथिवीस्थानां सर्व्वलोकानां विचारं
करिष्यति तद्दिनं न्यरूपयत्; अपरं तस्य श्मशानोत्थापनेन तस्मिन् सर्व्वेभ्यः
३२ प्रमाणं प्रादात्। तदा श्मशानाद् उत्थानस्य कथां श्रुत्वा केचिद् उपाहसन्
३३ केचिदवदन् एनां कथां पुनरपि त्वत्तः श्रोष्यामः। ततः पौलस्तेषां समीपात्
३४ प्रस्थितवान्। तथापि केचिल्लोकास्तेन सार्द्धं मिलित्वा व्यश्वसन् तेषां मध्ये
ऽरेयपागीयदियनुसियो दामारीनामा काचिन्नारी कियन्तो नराश्चासन्।

---

१८ अष्टादशोऽध्यायः।

१ पौलस्य करिन्थनगरगमनं भ्रमणम् ईश्वरकथाप्रचारणं १२ गाल्लियोसमीपेऽपवादितस्यापि तस्य मुक्तिः १८ नानानगराणि गत्वा शिष्याणां स्थैर्य्यकरणं २४ आपल्लोकथा च।

१ तद्घटनातः परं पौलो ऽथीनीनगराद् यात्रां कृत्वा करिन्थनगरम्
२ आगच्छत्। तस्मिन् समये क्लौदियो रोमानगरं विहाय गन्तुम् सर्व्वान्
यिहूदीयान् आज्ञापयत् तस्मात् प्रिस्किल्लानाम्ना जायया सार्द्धम् इता-
लियादेशात् किञ्चित्पूर्व्वम् आगमत् यः पन्तदेशे जात आक्कुलनामा
३ यिहूदीयलोकः पौलस्तं साक्षात् प्राप्य तयोः समीपमितवान्। तौ दूष्य-
निर्म्माणजीविनौ तस्मात् परस्परम् एकवृत्तिकत्वात् स ताभ्यां सह उषित्वा
४ तत् कर्म्माकरोत्। अपरं प्रतिविश्रामवारं भजनभवनं गत्वा विचारं कृत्वा
५ यिहूदीयान् अन्यदेशीयांश्च प्रवृत्तिं ग्राहितवान्। अपरञ्च सीलतिमथियौ माकिदनियादेशात् समेतयोः सतोः पौल उत्तप्तमना भूत्वा यीशु-
६ रीश्वरेणाभिषिक्तो भवतीति प्रमाणं यिहूदीयानां समीपे प्रादात। किन्तु

ते ऽतीव विरोधं विधाय पाषण्डीयकथां कथितवन्तस्ततः पौलो वस्त्रं
धुन्वन् एतां कथां कथितवान् युष्माकं शोणितपातापराधो युष्मान्
प्रत्येव भवतु तेनाहं निरपराधी ऽद्यारभ्य भिन्नदेशीयानां समीपं यामि।
अनन्तरं स तस्मात् प्रस्थाय भजनभवनसमीपस्थस्य युस्तनाम्न ईश्वरभक्तस्य ७
भिन्नदेशीयस्य निवेशनं प्राविशत्। ततः क्रीष्पनामा भजनभवनाधिपतिः ८
सपरिवारः प्रभौ व्यश्वसीत्। अपरं करिन्थनगरीया बहवो लोकाः समाकर्ण्य
विश्वस्य मज्जिता अभवन्। ततःपरं क्षणदायां प्रभुः पौलं दर्शनेन भाषित- ९
वान् मा भैषीः, मा निरसीः कथां प्रचारय। अहं त्वया सार्द्धम् आसे १०
हिंसार्थं कोपि त्वां स्प्रष्टुं न शक्ष्यति नगरेऽस्मिन् मदीया लोका बहव
आसते। तस्मात् तन्नगरे पौलः प्रायेण सार्द्धवत्सरपर्य्यन्तं संस्थायेश्वरस्य ११
कथाम् उपादिशत्।

अपरञ्च गाल्लियोनामा कश्चिद् आखायादेशस्य प्राड्विवाकः समभवत् १२
ततो यिहूदीया एकवाक्याः सन्तः पौलम् आक्रम्य विचारस्थानं नीत्वा १३
मानुष एष व्यवस्थाया विरुद्धम् ईश्वरभजनं कर्त्तुं लोकान् कुप्रवृत्तिं
ग्राहयतीति निवेदितवन्तः। ततः पौले प्रत्युत्तरं दातुम् उद्यते सति १४
गाल्लियो यिहूदीयान् व्याहरत्, यदि कस्यचिद् अन्यायस्य वातिशयदुष्ट-
ताचरणस्य विचारोऽभविष्यत् तर्हि युष्माकं कथा मम सहनीयाभविष्यत्;
किन्तु यदि केवलं कथाया वा नाम्नो वा युष्माकं व्यवस्थाया विवादो भवति १५
तर्हि तस्य विचारमहं न करिष्यामि यूयं तस्य मीमांसां कुरुत। ततः स १६
तान् विचारस्थानाद् दूरीकृतवान्। अपरञ्च भिन्नदेशीयाः सोस्थिनिनाम्नो १७
भजनभवनस्य प्रधानाधिपतिं धृत्वा विचारस्थानस्य सम्मुखे प्राहरन्
तथापि गाल्लियो तेषु सर्व्वकर्म्मसु न मनो न्यदधात्।

तदनन्तरं पौलस्तत्र पुनर्बहुदिनानि न्यवसत् ततो भ्रातृगणाद् १८
विसर्जनं प्राप्य किञ्चनव्रतनिमित्तं किंक्रियानगरे शिरो मुण्डयित्वा
प्रिस्किल्लाक्किलाभ्यां सहितो जलपथेन सुरियादेशं गतवान्। तत इफिष- १९
नगर उपस्थाय तत्र तौ स्थापयित्वा स्वयं भजनभवनं प्रविश्य यिहू-

२० दोयैः सह विचारितवान्। तेनते स्वैः सार्द्धं पुनः कतिपयदिनानि
स्थातुं तं व्यनयन् स तदनङ्गीकृत्य कथामेतां कथितवान् यिरूशालमि
२१ आगाम्युत्सवपालनार्थं मया गमनीयं; पश्चाद् ईश्वरेच्छायां जातायां
युष्माकं समीपं पुनर्व्याघुट्यागमिष्यामि; ततः परं स तै र्विसृष्टः सन्
२२ जलपथेन इफिषनगरात् प्रस्थितवान्। ततः कैसरियायाम् उपस्थितः
सन् नगरं गत्वा मण्डलीं नमस्कृत्य तस्माद् आन्तियखियानगरं प्रस्थित-
२३ वान्। अपरं तत्र कियत्कालं यापयित्वा तस्मात् प्रस्थाय सर्व्वेषां
शिष्याणां मनांसि सुस्थिराणि कुर्व्वन् क्रमशो गलातियाफ्रुगियादेशयो
र्भ्रमित्वा गतवान्।
२४ तस्मिन्नेव समये सिकन्दरियानगरे जातो ऽपल्लोनामा शास्त्रवित्
२५ सुवक्ता यिहूदीय एक इफिषनगरम् आगतवान्। स शिक्षितप्रभुमार्गो
मनसोद्योगी च सन् योहनो मज्जनमात्रं ज्ञात्वा यथार्थतया प्रभोः कथां
२६ कथयित्वा समुपादिशत्। अनन्तरम् एष जनो निर्भयत्वेन भजनभवने
कथयितुम् आरब्धवान् तत आक्किलप्रिस्किल्लौ तस्योपदेशकथां निशम्य
२७ तं स्वयोः समीपम् आनीय शुद्धरूपेणेश्वरस्य कथाम् अबोधयताम्। पश्चात्
स आखायादेशं गन्तुं मतिं कृतवान् तदा तत्रत्यः शिष्यगणो यथा तं
गृह्लाति तथा भ्रातृगणेन लिखित्वा प्रेषिते सति, अपल्लोस्तत्रोपस्थितः
सन् ये जना अनुग्रहं प्राप्य प्रत्यायन् तेषां बहूपकारान् अकरोत्
२८ फलतो यीशुरभिषिक्तो जन इति शास्त्रप्रमाणं दत्त्वा प्रकाशरूपेण प्रति-
पन्नं कृत्वा यिहूदीयान् निरुत्तरान् कृतवान्।

---

१९ ऊनविंशोऽध्यायः ।

१ पौलद्वारा द्वादशजनेभ्यः पवित्रात्मदानं ८ अनेकलोकानां विपरीतं पौलेन निवेदनं बहुलोकानां स्वास्थ्यं, १३ अपवित्रभूतेन स्कीवापुत्त्राणां कृतक्षतत्वं मायाविद्यायाः पुस्तकस्य दग्धत्वं २१ पौलस्यविरुद्धं दीमीत्रियस्वर्णकारस्य कलहः नगराधिपतिभिस्तस्य निवारणञ्च।

१ अपरम् करिन्थनगरे ऽपल्लोस्स्थितिकाले पौल उत्तरप्रदेशेनागच्छन्
२ इफिषनगर उपस्थितवान्। तत्र कतिपयशिष्यान् साक्षात् प्राप्य तान्

अपृच्छत्, यूयं विश्वस्य पवित्रमात्मानं प्राप्ता न वा? ततस्ते प्रत्यवदन् पवित्र
आत्मा यद्दीयते तद् अस्माभिः श्रुतमपि नहि। तदा सोवदत् तर्हि यूयं ३
केन मज्जिता अभवत? तेऽकथयन् योहनो मज्जनेन। तदा पौल उक्त- ४
वान् इतः परं य उपस्थास्यति तत्र, अर्थात् यीशुख्रीष्टे, विश्वसितव्यम् इत्युक्त्वा
योहन् मनः परिवर्त्तनरूपेण मज्जनेन जले लोकान् अमज्जयत्। तादृशीं ५
कथां श्रुत्वा ते प्रभो र्यीशुख्रीष्टस्य नाम्ना मज्जिता अभवन्। ततः पौलेन ६
तेषां गात्रेषु करेऽर्पिते तेषामुपरि पवित्र आत्मावरूढवान् तस्मात् ते
नानादेशीया भाषा भविष्यत्कथाश्च कथितवन्तः। ते प्रायेण द्वादश- ७
जना आसन्।

अनन्तरं पौलो भजनभवनं गत्वा प्रायेण मासत्रयम् ईश्वरस्य राज्यस्य ८
विचारं कृत्वा लोकान् प्रवर्त्त्य साहसेन कथामकथयत्। किन्तु कठिनान्तः- ९
करणत्वात् कियन्तो जना न विश्वस्य सर्व्वेषां समक्षम् एतत्पथस्य निन्दां कर्त्तुं
प्रवृत्ताः; अतः पौलस्तेषां समीपात् प्रस्थाय शिष्यगणं पृथक्कृत्वा प्रत्यहं
तुरान्ननाम्नः कस्यचिज् जनस्य पाठशालायां विचारं कृतवान्। इत्थं १०
वत्सरद्वयं गतं तस्माद् आशियादेशनिवासिनः सर्व्वे यिहूदीया अन्य-
देशीयलोकाश्च प्रभो र्यीशोः कथाम् अश्रौषन्। अपरं पौलद्वारा ईश्वर ११
एतादृशम् अद्भुतं कर्म्म कृतवान् तेन तस्य परिधेये गात्रमार्जने वा १२
वसने पीडितलोकानाम् समीपम् आनीते ते सर्व्वे निरामया जाता अप-
वित्रा भूताश्च तेभ्यो बहिर्गतवन्तः।

अपरञ्च देशाटनकारिणः कियन्तो यिहूदीया भूतापसारिणो भूत- १३
ग्रस्तलोकानां सन्निधौ प्रभो र्यीशोर्नाम जप्त्वा वाक्यमिदम् अवदन् यस्य
कथां पौलः प्रचारयति तस्य यीशो र्नाम्ना युष्मान् आज्ञापयामः। अपरञ्च १४
स्कीवानाम्नो यिहूदीयानां प्रधानयाजकस्य सप्तभिः पुत्रैस्तथा कृते सति
कश्चिद् अपवित्रो भूतः प्रत्युदितवान् यीशुं जानामि पौलञ्च परिचिनोमि १५
किन्तु के यूयं? इत्युक्त्वा सोपवित्रभूतग्रस्तो मनुष्यो लम्फं कृत्वा तेषामुपरि १६
पतित्वा बलेन तान् जितवान् तस्मात्ते नग्नाः क्षताङ्गाश्च सन्तः तस्माद्

१७ गेहात् पलायन्त। अनन्तरं सा वाग् इफिषनगरनिवासिनां सर्व्वेषां
यिहूदीयानां भिन्नदेशीयानां लोकानाञ्च श्रवोगोचरीभूता; ततः सर्व्वे भयं
१८ गताः प्रभो र्यीशोर्नाम्नो यशो ऽवर्द्धत। अपरञ्च येषामनेकानां लोकानां प्रती-
१९ तिरजायत त आगत्य स्वैः कृतां क्रियां प्रकाशरूपेणाङ्गीकृतवन्तः। अपरं
बहवो मायाकर्म्मकारिणः स्वस्वग्रन्थान् आनीय राशीकृत्य सर्व्वेषां समक्षम्
अदाहयन् ततो गणनां कृत्वाबुध्यन्त पञ्चायुतरूप्यमुद्रामूल्यपुस्तकानि
२० दग्धानि। इत्थं प्रभोः कथा सर्व्वदेशं व्याप्य प्रबला जाता।
२१ अपरञ्च सर्व्वेष्वेतेषु कर्म्मसु सम्पन्नेषु सत्सु पौलो माकिदनियाखायादेशाभ्यां
यिरूशालमं गन्तुं मतिं कृत्वा कथितवान् तत्प्रति यात्रायां कृतायां सत्यां
२२ मया रोमानगरं द्रष्टव्यं। अनन्तरं स्वानुगतलोकानां तिमथीयरास्तौ द्वौ जनौ
माकिदनियादेशं प्रति प्रहित्य स्वयम् आशियादेशे कतिपयदिनानि स्थित-
२३ वान्। किन्तु तस्मिन् समये मार्गे ऽस्मिन् कलहो जातः। तत्कारणमिदं
२४ अर्तिमीनामानं रूप्यविग्रहं निर्म्माय स्वेषां सर्व्वेषां शिल्पिनाञ्च यथेष्टलाभम्
अजनयत् यो दीमीत्रियनामा नाडीन्धमः स तान् तत्कर्म्मजीविनः सर्व्व-
२५ लोकांश्च समाहूय भाषितवान् हे महेच्छा एतेन विग्रहनिर्म्माणेना-
२६ स्माकं जीविका भवति, एतद् यूयं वित्थ; किन्तु हस्तनिर्म्मितेश्वर
ईश्वरो नहि पौलनाम्ना केनचिज्जनेन कथामिमां व्याहृत्य केवलेफिष-
नगरे नहि प्रायेण सर्व्वस्मिन् आशियादेशे प्रवृत्तिं ग्राहयित्वा बहु-
२७ लोकानां शेमुषी परावर्त्तिता, एतद् युष्माभि र्दृश्यते श्रूयते च। तेनास्माकं
वाणिज्यस्य सर्व्वथा हानेः सम्भवनं केवलमिति नहि, आशियादेशस्थानां
वा सर्व्वजगत्स्थानां लोकानां पूज्या यार्तिमी महादेवी तस्या मन्दिरस्या-
२८ पज्ञानस्य तस्या ऐश्वर्य्यस्य नाशस्य च सम्भावना विद्यते। एतादृशीं कथां श्रुत्वा
ते महाक्रोधान्विताः सन्त उच्चैःकारं कथितवन्त इफिषीयानाम् अर्तिमी
२९ देवी महती भवति। ततः सर्व्वनगरं कलहेन परिपूर्णमभवत् ततः परं ते
माकिदनीयगायारिस्तार्खनामानौ पौलस्य द्वौ सहचरौ धृत्वैकचित्ता
३० रङ्गभूमिं जवेन धावितवन्तः। ततः पौलो लोकानां सन्निधिं यातुम्

उद्यतवान् किन्तु शिष्यगणस्तं वारितवान्। अनन्तरं पौलस्यात्मीया ३१
आशियादेशस्थाः कतिपयाः प्रधानलोकास्तस्य समीपं नरमेकं प्रेष्य त्वं
रङ्गभूमिं मा गा इति न्यवेदयन्। ततो नानालोकानां नानाकथाकथ- ३२
नात् सभा व्याकुला जाता किं कारणाद् एतावती जनताभवत् एतद्
अधिकै र्लोकै र्नाज्ञायि। ततः परं यिहूदीयैः सिकन्दरेऽग्रसरे कृते ३३
लोकैश्च स जनतामध्याद् बलाद् वहिः कृतैं सिकन्दरो हस्तेन सङ्केतं कृत्वा
लोकेभ्य उत्तरं दातुमुद्यतवान् किन्तु स यिहूदीयलोक इति ते निश्चितं ३४
बुद्ध्वा इफिषीयानाम् अर्तिमी देवी महती भवतीति वाक्यं प्रायेण पञ्च
दण्डान् यावद् एकस्वरेण प्रोक्तवन्तः। ततो नगराधिपतिस्तान् सुस्थि- ३५
रान् कृत्वा कथितवान् हे इफिषीयाः सर्व्वे लोका आकर्णयत, अर्तिमी-
महादेव्या महादेवात् पतितायास्तत्प्रतिमायाश्च पूजनम् इफिष-
नगरस्थाः सर्व्वे लोकाः कुर्व्वते, एतत् के न जानन्ति? तस्माद् एतयोः ३६
प्रतिकूलं केपि कथयितुं न शक्नुवन्ति, इति ज्ञात्वा युष्माभिः सुस्थिरत्वेन
स्थातव्यम् अविविच्य किमपि कर्म्म न कर्त्तव्यञ्च। यान् एतान् मनुष्यान् ३७
यूयमत्र समानयथ ते मन्दिरद्रव्यापहारका युष्माकं देव्या निन्दकाश्च
न भवन्ति। यदि कञ्चन प्रति दीमीत्रियस्य तस्य सहायानाञ्च काचिद् ३८
आपत्ति र्विद्यते तर्हि प्रतिनिधिलोका विचारस्थानञ्च सन्ति ते तत् स्थानं
गत्वा उत्तरप्रत्युत्तरे कुर्व्वन्तु; किन्तु युष्माकं काचिदपरा कथा यदि ३९
तिष्ठति तर्हि विचारसभायां तस्या निष्पत्ति र्भविष्यति। किन्त्वेतस्य ४०
विरोधस्योत्तरं दातुं शक्नुम एतादृशस्य कस्यचित् कारणस्याभावाद् अद्य-
तनकलहहेतो र्विचारस्थानं प्रत्यस्माकम् आनयनशङ्का विद्यते। इति ४१
कथयित्वा स सभास्थलोकान् विसृष्टवान्।

२० विंशोऽध्यायः।

१ माकिदनियादेशाय पौलस्य गमनं ७ कथाप्रचारसमय उपरिस्थवातायनात् पतितस्योतुखस्य स्वास्थ्यं १३ मिलीतनगरे पौलस्योपस्थितिः १७ इफिषस्य-प्राचीनानामुपदेशः स्वस्मिन् तेषु च भविष्यद्वाक्यप्रचारणं ३६ तस्माद् विसृष्टत्वञ्च।

इत्थं कलहे निवृत्ते सति पौलः शिष्यगणम् आहूय विसर्जनं प्राप्य स्वयं १

२ माकिदनियादेशं प्रस्थितवान्। अनन्तरं तेन स्थानेन गत्वा तद्देशीयान्
३ शिष्यान् बहूपदिश्य यूनानीयदेश उपस्थितवान्। पश्चात् तत्र मासत्रयं
स्थित्वा तस्मात् सुरियादेशं यातुम् उद्यतः किन्तु यिहूदीयास्तं हन्तुं
गुप्ता अतिष्ठन् तस्मात् स पुनरपि माकिदनियामार्गेण परावृत्य यातुं
४ मतिं कृतवान्। अपरञ्च बिरयानगरीयः सोपातर् थिषलनीयारिस्तार्खः
सिकुन्दरो दर्ब्बीनगरीयगायं तिमथि आशियादेशीय तुखिकः त्रफिमश्च
५ तेन सार्द्धं आशियादेशं यावद् गतवन्तः। एते सर्व्वे ऽग्रसराः सन्तोऽस्मान्-
६ पेक्ष्य त्रोयानगरे स्थितवन्तः। अनन्तरं किण्वशून्यपूपोत्सवदिने गते
सति वयं फिलिपीनगरात् तोयपथेन गत्वा पञ्चभि र्दिनै स्त्रोयानगर
उपस्थाय तत्र सप्तदिनान्यवातिष्ठाम।

७ 　तदनन्तरं सप्ताहस्य प्रथमदिने पूपान् भंक्तुं शिष्ये र्मिलिते सति पौलः
परदिने तस्माद् यात्रां कर्त्तुम् उद्यतः सन् तदह्नि प्रायेण क्षपाया यामद्वयं
८ यावत् शिष्येभ्यो धर्म्मकथाम् अकथयत्। अपरम् उपरिस्थे यस्मिन् प्रकोष्ठे
९ सभां कृत्वासन् तत्र बहवः प्रदीपाः प्राज्वलन्। अपरम् उतुखनामा
कश्चन युवा वातायन उपविशन् घोरतरनिद्रायाम् अमज्जत् तदा पौलेन
बहुक्षणं कथायां प्रचारितायां निद्रामग्नः स तस्माद् उपरिस्थतृतीय-
१० प्रकोष्ठाद् अपतत् ततो लोकास्तं मृतकल्पं धृत्वोदतोलयन्। ततः परं पौलो
ऽवरुह्य तस्य गात्रे पतित्वा तं क्रोडे निधाय कथितवान् यूयं व्याकुला मा
११ भूत नायं प्राणै र्वियुक्तः। पश्चात् स पुनरपि उपरि गत्वा पूपान् भंक्त्वा
१२ प्रभातं यावत् कथोपकथने कृत्वा प्रस्थितवान्। अनन्तरं ते तं जीवन्तं
युवानं गृहीत्वा गत्वा परमाप्यायिता जाताः।

१३ 　ततः परं वयं तस्माद् अग्रे पोतं गत्वास्सनगरम् उत्तीर्य्य पौलं
ग्रहीतुं मतिम् अकुर्म्म यतः स तत्र पद्भ्यां व्रजितुं मतिं कृत्वेति
१४ निरूपितवान्। तस्मात् तत्रास्माभिः सार्द्धं तस्मिन् मिलिते सति वयं
१५ तम् नीत्वा मितुलीन्युपद्वीपम् आगतवन्तः। पश्चात् तस्मात् पोतं
मोचयित्वा परेऽहनि खीयोपद्वीपस्य सम्मुखं लब्धवन्तस्तस्माद् एकेनाह्ना

सामोपद्वीपं गत्वा पोतं लागयित्वा त्रोगुल्लीये स्थित्वा परस्मिन् दिवसे
मिलीतनगर उपातिष्ठाम। यतः पौल आशियादेशे कालं यापयितुम् १६
नाभिलष्यन् इफिषनगरं त्यक्त्वा यातुं मन्त्रणां स्थिरीकृतवान्; यस्मात्
यदि साध्यं भवति तर्हि निस्तारोत्सवस्य पञ्चाशत्तमदिने स यिरूशा-
लम्युपस्थातुं मतिं कृतवान्।

ततः परं पौलो मिलीताद् इफिषं प्रति लोकं प्रहित्य मण्डल्याः १७
प्राचीनान् आहूयानीतवान्। तेषु तस्य समीप उपस्थितेषु स तेभ्य इमां १८
कथां कथितवान् अहम् आशियादेशे प्रथमागमनम् आरभ्याद्ययावत्
युष्माकं सन्निधौ स्थित्वा सर्व्वसमये यथाचरितवान् तद् यूयं जानीथ; फलतः १९
सर्व्वथा नम्रमनाः सन् बह्वश्रुपातेन यिहूदीयानाम् कुमन्त्रणाजातनाना-
परीक्षाभिः प्रभोः सेवामकरवं। कामपि हितकथां न गोपायितवान् २०
तां प्रचार्य्य सप्रकाशं गृहे गृहे समुपदिश्येश्वरं प्रति मनः परावर्त्तनीयं
प्रभौ यीशुख्रीष्टे विश्वसनीयं यिहूदीयानाम् अन्यदेशीयलोकानाञ्च २१
समीप एतादृशं साक्ष्यं ददामि। पश्यत साम्प्रतम् आत्मनाकृष्टः सन् २२
यिरूशालम्नगराय यात्रां करोमि तत्र मास्प्रति यद्यद् घटिष्यते तान्यहं
न जानामि; किन्तु मया बन्धनं क्लेशश्च भोक्तव्य इति पवित्र आत्मा नगरे २३
नगरे प्रमाणं ददाति। तथापि तं क्लेशमहं तृणाय न मन्ये; अपरम् ईश्वर- २४
स्यानुग्रहविषयकस्य सुसंवादस्य प्रमाणं दातुं प्रभो र्यीशोः सकाशाद् यस्याः
सेवाया भारं प्राप्नवं तां सेवां साधयितुं तथा सानन्दं स्वमार्गं समापयितुं
निजप्राणानपि प्रियान् न मन्ये। अपरञ्चाधुना पश्यत येषां समीपेऽहम् २५
ईश्वरीयराज्यस्य सुसंवादं प्रचार्य्य भ्रमणं कृतवान् एतादृशा यूयं मम
वदनं पुन र्द्रष्टुं न प्राप्स्यथ एतदप्यहं जानामि। अहम् ईश्वरस्य २६
सर्व्वान् आदेशान् प्रकाशयितुं न न्यवर्त्ते। अहं सर्व्वेषां लोकानां रक्तपात- २७
दोषाद् यन्निर्दोष आसे तस्याद्य युष्मान् साक्षिणः करोमि। यूयं स्वेषु तथा २८
येषु अजेषु पवित्र आत्मा युष्मान् अधिपतीन् विधाय न्ययुंक्त तेषु सर्व्वेषु
सावधाना भवत अपरञ्च यां मण्डलीं प्रभु र्निजरक्तपातेन क्रीतवान् ताम्

२९ अवत यतो मया गमने कृतएव दुर्जया वृका युष्माकं मध्यं प्रविश्य व्रजं
३० प्रति निर्दयताम् आचरिष्यन्ति वरञ्च युष्माकमेव लोका उत्थाय शिष्य-
३१ गणम् अपहर्त्तुं विपरीतम् उपदेक्ष्यन्तीत्यहं जानामि। इतिहेतो र्यूयं
सचैतन्याः सन्तस्तिष्ठत, अपरञ्चाहम् साश्रुपातः सन् वत्सरत्रयं यावद्
३२ दिवानिशं प्रतिजनं बोधयितुं न न्यवर्त्ते तदपि स्मरत। इदानीं हे
भ्रातरो युष्माकं निष्ठां जनयितुं पवित्रीकृतलोकानां मध्येऽधिकारञ्च दातुं
समर्थो य ईश्वरस्तथा तस्यानुग्रहस्य यो वादस्तयोरुभयो र्युष्मान् समार्प-
३३ यम्। अपरम् कस्यापि स्वर्णं रूप्यं वस्त्रं वा प्रति मया लोभो न कृतः।
३४ किन्तु मम मत्सहचरलोकानाञ्च दैन्यनिवारणार्थं मदीयमिदं करद्वयम्
३५ अश्राम्यद् एतद् यूयं जानीथ। अनेन प्रकारेण ग्रहणाद् दानं भद्रमिति
यद्वाक्यं प्रभु र्यीशुः कथितवान् तत् स्मर्त्तुं दरिद्रलोकानामुपकारार्थं
श्रमं कर्त्तुञ्च युष्माकम् उचितम् एतत्सर्व्वं युष्मानहम् उपदिष्टवान्।
३६ एतां कथां कथयित्वा स जानुनी पातयित्वा सर्व्वैः सह प्रार्थयत।
३७ तेन ते क्रन्दन्तः पुन र्मम मुखं न द्रक्ष्यथ विशेषत एषा या कथा
तेनाकथि तत्कारणात् शोकं विलापञ्च कृत्वा ते कण्ठं धृत्वा चुम्बितवन्तः।
३८ पश्चात् ते तं पोतं नीतवन्तः।

---

२१ एकविंशोऽध्यायः।

१ पौलस्य यिरूशालमगमनं ७ मार्गमध्ये सुसंवादप्रचारकस्य फिलिपस्य गेहगमनं १२ आगाबद्वारा पौलस्य दुःखे भविष्यद्वाक्यं १७ यिरूशालमि तदुपस्थितिः आचरणञ्च २७ तस्मिन् लोकानां कलहः ३७ सहस्रसेनापतिना तम्मुक्तिस्तेन सार्द्धं कथोपकथनञ्च।

१ तदनन्तरं तै र्विसृष्टाः सन्तः पोतं वाहयित्वा ऋजुमार्गेण कोष्
उपद्वीपम् आगत्य परेऽहनि रोदियोपद्वीपम् आगच्छाम ततस्तस्मात्
२ पातारायाम् उपातिष्ठाम। ततःपरं तत्र फैनीकियादेशीयं पोतमेकं
३ प्राप्य तमारुह्य गच्छन्तः। कुप्रोपद्वीपं दृष्ट्वा तं सव्यदिशि स्थाप-
यित्वा सुरियादेशं गत्वा पोतस्थद्रव्याण्यवरोहयितुं सोरनगरे लागित-

वन्तः। अपरञ्च तत्र शिष्यगणस्य साचात्करणाद् वयं तत्र सप्तदिनानि ४
स्थितवन्तः पश्चात्ते पवित्रेणात्मना पौलं व्याहरन् त्वं यिरूशालम्-
नगरं मा गमः। ततस्तेषु सप्तसु दिनेषु यापितेषु सत्सु वयं तस्मात् ५
स्थानात् निजवर्त्मना गतवन्तः; तस्मात् ते सबालवृद्धवनिता अस्माभिः
सह नगरस्य परिसरपर्य्यन्तम् आगताः पश्चाद्वयं जलधितटे जानुपातं
प्रार्थयामहि। ततः परस्परं विसृष्टाः सन्तो वयं पोतं गतास्ते तु स्वस्वगृहं ६
व्याघुट्य व्रजितवन्तः।

ततः परं वयं सोरनगराद् गत्वा तलिमायिनगरम् उपातिष्ठाम ७
तत्रास्माकं समुद्रीयमार्गस्यान्तोऽभवत् तत्र भ्रातृगणं नमस्कृत्य दिनमेकं तैः
सार्द्धम् उषितवन्तः। परे ऽहनि पौलस्तस्य सङ्गिनो वयञ्च प्रतिष्ठमानाः ८
कैसरियानगरम् आगत्य सुसंवादं प्रचार्य्य सप्तजनानां फिलिपनाम्नो
गृहं प्रविश्यावतिष्ठाम। तस्य चतस्रः कन्या अनूढा भविष्यद्वादिन्य ९
आसन्। तत्रास्मासु बहुदिनानि प्रोषितेषु यिहूदीयदेशाद् आगत्या- १०
गावनामा भविष्यद्वादी समुपस्थितवान्। सोऽस्माकं समीपमेत्य पौलस्य ११
कटिबन्धनं गृहीत्वा निजहस्तपादान् बद्ध्वा भाषितवान् यस्येदं कटि-
बन्धनं तं यिहूदीयलोका यिरूशालमनगर इत्थं बद्ध्वा भिन्नदेशीयानां
करेषु समर्पयिष्यन्तीति वाक्यं पवित्र आत्मा कथयति।

एतादृशीं कथां श्रुत्वा वयं तन्नगरवासिनो लोकाश्च यिरूशालमं न १२
यातुं पौलं व्यनयाम; किन्तु स प्रत्यवादीत्, यूयं किं कुरुथ? किं १३
क्रन्दनेन ममान्तःकरणं विदीर्णं करिष्यथ? प्रभो र्यीशो र्नाम्नो निमित्तं
यिरूशालमि बद्धो भवितुं केवलं तन्न प्राणान् दातुमपि ससज्जोऽस्मि।
तेनास्माकं कथायाम् अगृहीतायाम् ईश्वरस्य यथेच्छा तथैव भवत्वित्युक्त्वा १४
वयं निरस्याम। परेऽहनि पाथेयद्रव्याणि गृहीत्वा यिरूशालमं प्रति १५
यात्राम् अकुर्म्म। ततः कैसरियानगरनिवासिनः कतिपयाः शिष्या १६
अस्माभिः सार्द्धम् इत्वा कुप्रीयेन म्नासोन्नाम्ना येन प्राचीनशिष्येण सार्द्धम्
अस्माभि र्वस्तव्यं तस्य समीपम् अस्मान् नीतवन्तः।

१७ ततः परम् अस्मासु यिरूशालम्युपस्थितेषु तत्रस्थभ्रातृगणोऽस्मान्
१८ आह्लादेन गृहीतवान्। परस्मिन् दिवसे लोकप्राचीनेषु सर्व्वेषु परिषदि
१९ संस्थितेषु पौलोऽस्माभिः सह याकुबो निकटे तां प्राविशत्। अनन्तरं
स तान् नत्वा तस्य प्रचारणेन भिन्नदेशीयान् प्रतीश्वरो यानि कर्म्माणि
२० साधितवान् तदीयां कथाम् अनुक्रमात् कथितवान्। इति श्रुत्वा ते
प्रभुं धन्यं प्रोच्य वाक्यमिदम् अभाषन्त हे भ्रात र्यिहूदीयानां मध्ये
बहुसहस्राणि लोका विश्वासिन आसते किन्तु ते सर्व्वे व्यवस्थामताचारिण
२१ एतत् प्रत्यक्षं पश्यसि। अपरं शिशूनां त्वक्छेदनाद्याचारमाचरणं
प्रतिषिध्य त्वं भिन्नदेशनिवासिनो यिहूदीयलोकान् मूसामश्रद्धातुं यदु-
२२ पदिशसि तदपि ते परम्परया विदन्ति। त्वमत्रागतोसीति वार्त्तां समा-
कर्ण्य जननिवहो मिलित्वावश्यमेवागमिष्यति; अतएव किं करणीयम्?
२३ अत्र वयं मन्त्रयित्वा यमुपायं त्वां वदामस्तं त्वमाचर। व्रतं कर्त्तुं कृत-
सङ्कल्पा येऽस्माकं चत्वारो मानवाः सन्ति तान् गृहीत्वा तैः सहितः स्वं
२४ शुचिं कुरु तथा तेषां शिरोमुण्डने यो व्ययो भवति तं त्वं देहि। तथा
कृते त्वदीयाचारे या जनश्रुति र्जायते सालीका किन्तु त्वं विधिं पाल-
२५ यित्वा व्यवस्थानुसारेणैवाचरसीति ते भोत्स्यन्ते। अपरञ्च भिन्नदेशीयानां
विश्वासिलोकानां निकटे वयं पत्रं लिखित्वेत्थं स्थिरीकृतवन्तः, देवप्रसाद-
भक्ष्यं रक्तं गलपीडनमारितप्राणिभक्ष्यं व्यभिचारश्चैतेभ्यः स्वरक्षणव्यतिरे-
२६ केण तेषामन्यविधिपालनं करणीयं न। ततः पौलस्तान् मानुषानादाय
परस्मिन् दिवसे तैः सह शुचि र्भूत्वा मन्दिरं गत्वा शौचकर्म्मणो दिनेषु
सम्पूर्णेषु तेषाम् एकैकार्थं नैवेद्याद्युत्सर्गो भविष्यतीति ज्ञापितवान्।
२७ तदनन्तरं तेषु सप्तसु दिनेषु समाप्तकल्पेषु सत्सु आशियादेशनिवासिनो
यिहूदीयास्तं मध्येमन्दिरं विलोक्य जननिवहस्य मनःसु कुप्रवृत्तिं
जनयित्वा तं धृत्वा प्रोच्चैः प्रावोचन् हे इस्रायेल्लोकाः सर्व्वे साहाय्यं कुरुत।
२८ यो मनुज एतेषां लोकानां मूसाव्यवस्थाया एतस्य स्थानस्यापि विपरीतं
सर्व्वत्र सर्व्वान् शिक्षयति स एषः; विशेषतः स भिन्नदेशीयलोकान् मन्दिरम्

आनीय पवित्रस्थानमेतद् अपवित्रमकरोत्। पूर्व्वं ते मध्येनगरम् इफिष- २९
नगरीयं त्रफिमं पौलेन सहितं दृष्टवन्त एतस्मात् पौलस्तं मन्दिरमध्यम्
आनयद् इत्यन्वमिमत। अतएव सर्व्वस्मिन् नगरे कलहोत्पन्नत्वात् धावन्तो ३०
लोका आगत्य पौलं धृत्वा मन्दिरस्य वहिराकृष्यानयन् तत्क्षणाद्
द्वाराणि सर्व्वाणि च रुद्धानि। अनन्तरं तेषु तं हन्तुमुद्यतेषु यिरूशालम्- ३१
नगरे महानुपद्रवो जात इति वार्त्तायां सहस्रसेनापतेः कर्णगोचरी-
भूतायां सत्यां स तत्क्षणात् सैन्यानि सेनापतिगणञ्च गृहीत्वा जवेनागत-
वान्। ततो लोकाः सेनागणेन सह सहस्रसेनापतिम् आगच्छन्तं दृष्ट्वा ३२
पौलताडनातो न्यवर्त्तन्त। अनन्तरं स सहस्रसेनापतिः सन्निधा- ३३
वागम्य पौलं धृत्वा शृङ्खलद्वयेन बद्धुम् आदिश्य तान् पृष्टवान् एष
कः? किं कर्म्म चायं कृतवान्? ततो जनसमूहस्य कश्चिद् एकप्रकारं ३४
कश्चिद् अन्यप्रकारं वाक्यम् अरौत् स तत्र सत्यं ज्ञातुम् अशक्तः सन् तस्मात्
कलहात् तं दुर्गं नेतुम् आज्ञापयत्। अनन्तरं सोपानस्योपरि प्राप्तेषु तेषु ३५
लोकानां साहसकारणात् सेनागणः पौलमुत्तोल्य नीतवान्। ततः सर्व्वे ३६
लोकाः पश्चाद्गामिनः सन्त एनं दूरीकुरुतेति वाक्यम् उच्चैरवदन्।

ततः परं पौलस्य दुर्गानयनसमये स तस्मै सहस्रसेनापतये कथितवान् ३७
भवतः पुरस्तात् कथां कथयितुं भवान् अनुमन्यतां। ततः स तमपृच्छत् ३८
त्वं किं युनानीयां भाषां जानासि? यो मिसरीयो जनः पूर्व्वं विरोधं कृत्वा
चत्वारि सहस्राणि घातकान् सङ्गिनः कृत्वा विपिनं गतवान् सएव त्वं किं
न भवसि? तदा पौलोऽकथयत्, अहं किलिकियादेशस्य तार्षनगरीयो ३९
यिहूदीयो नाहं सामान्यनगरीयो मानवः; अतएव विनयेऽहं लोकानां
समक्षं कथां कथयितुं मामनुजानीष्व। अनन्तरं तेनानुज्ञातः पौलः ४०
सोपानोपरि तिष्ठन् हस्तेनेङ्गिते कृते सति सर्व्वे सुस्थिरा अभवन्।

## २२ द्वाविंशोऽध्यायः।

१ लोकेभ्यः पौलस्य निवेदनं २२ पौलस्य विरुद्धं लोकानां कथनं कशया तं ताडयितुं सेनापतेरादेशः ३० तस्य प्रहारस्य सभा यिहूदीयैः सह तस्य विचारं कर्त्तुमाज्ञापनञ्च।

१ तदा पौल इब्रीयभाषया कथयितुम् आरभत, हे पितृगणा हे भ्रातृ-
२ गणा इदानीं मम निवेदने समवधत्त। तदा स इब्रीयभाषया कथां
३ कथयतीति श्रुत्वा सर्व्वे लोका अतीव निःशब्दाः सन्तोऽतिष्ठन्। पश्चात्
सोऽकथयद् अहं यिहूदीय इति निश्चयः किलिकियादेशस्य तार्षनगरं
मम जन्मभूमिः; एतन्नगरीयस्य गमिलीयेलनाम्नोऽध्यापकस्य शिष्यो भूत्वा
पूर्व्वपुरुषाणां विधिव्यवस्थानुसारेण सम्पूर्णरूपेण शिक्षितोऽभवम् अपरम्
इदानीन्तना यूयं यादृशा भवथ तादृशोऽहमपीश्वरसेवाया उद्योगी जातः।
४ अपरञ्च मतमेतद् द्विष्ट्वा तद्ग्राहिणो नारीपुरुषान् कारायां बद्ध्वा तेषां
५ प्राणनाशपर्य्यन्तां विपक्षताम् अकरवम्। महायाजकः सभासदः प्राचीन-
लोकाश्च ममैतस्याः कथायाः प्रमाणं दातुं शक्नुवन्ति यस्मात् तेषां समी-
पाद् दम्मेषकनगरनिवासिभ्रातृगणार्थम् आज्ञापत्रं गृहीत्वा ये तत्र
स्थितास्तान् दण्डयितुं यिरूशालमम् आनयनार्थं दम्मेषकनगरं गतोस्मि।
६ किन्तु गच्छन् तन्नगरस्य समीपं प्राप्तवान् तदा द्वितीयप्रहरवेलायां
सत्याम् अकस्माद् गगणान्निर्गत्य महती दीप्तिः मम चतुर्दिशि प्रका-
७ शितवती। ततो मयि भूमौ पतिते सति हे शौल हे शौल कुतो मां
८ ताडयसि? मामप्रति भाषित एतादृश एको रवोपि मया श्रुतः। तदाहं
प्रत्यवदं, हे प्रभो को भवान्? ततः सोऽवादीत् यं त्वं ताडयसि स नासिरियो
९ यीशुरहं। अपरं मम सङ्गिनो लोकास्तां दीप्तिं दृष्ट्वा भियं प्राप्ताः किन्तु
१० माम्प्रत्युदितं तद्वाक्यं ते नाबुध्यन्त। ततः परं पृष्टवानहं हे प्रभो मया किं
कर्त्तव्यं? ततः प्रभुरकथयत्, उत्थाय दम्मेषकनगरं याहि त्वया यद्यत्
११ कर्त्तव्यं निरूपितमास्ते तत् तत्र त्वं ज्ञापयिष्यसे। अनन्तरं तस्याः
खरतरदीप्तेः कारणात् किमपि न दृष्ट्वा सङ्गिगणेन धृतहस्तः सन् दम्मे-
१२ षकनगरं व्रजितवान्। तदनन्तरं तन्नगरनिवासी सर्व्वेषां यिहूदीयानां

मान्यो व्यवस्थानुसारेण भक्तश्च हनानीयनामा मानव एको मम सन्निधिम्
एत्य तिष्ठन् अकथयत्, हे भ्रातः शौल सुदृष्टि र्भव तस्मिन् दण्डेऽहं सम्यक् १३
तं दृष्टवान्। ततः स मह्यं कथितवान् यथा त्वम् ईश्वरस्याभिप्रायं वेत्सि १४
तस्य शुद्धसत्त्वजनस्य दर्शनं प्राप्य तस्य श्रीमुखस्य वाक्यं शृणोषि तन्नि-
मित्तम् अस्माकं पूर्व्वपुरुषाणाम् ईश्वरस्त्वां मनोनीतं कृतवान्। यतो यद्यद् १५
अद्राक्षीरश्रौषीश्च सर्व्वेषां मानवानां समीपे त्वं तेषां साक्षी भविष्यसि।
अतएव कुतो विलम्बसे? प्रभो र्नाम्ना प्रार्थ्य निजपापप्रक्षालनार्थं मज्जनाय १६
समुत्तिष्ठ। ततः परं यिरूशालमनगरं परावृत्य गत्वा मन्दिरेऽहम् एकदा १७
प्रार्थये तस्मिन् समयेऽहम् अभिभूतः सन् प्रभुं साक्षात् पश्यन्; त्वं त्वरया १८
यिरूशालमः प्रतिष्ठस्व यतो लोका मयि तव साक्ष्यं न ग्रहीष्यन्ति
माम्प्रत्युदितं तस्येदं वाक्यम् अश्रौषम्। ततोहं प्रत्यवादिषम् हे प्रभो १९
प्रतिभजनभवनं त्वयि विश्वासिनो लोकान् बद्ध्वा प्रहृतवान्। तथा तव २०
साक्षिणः स्तिफानस्य रक्तपातनसमये तस्य विनाशं सम्मन्य सन्निधौ तिष्ठन्
हन्तृलोकानां वासांसि रक्षितवान् एतत् ते विदुः। ततः सोऽकथयत् २१
प्रतिष्ठस्व त्वां दूरस्थभिन्नदेशीयानां समीपं प्रेषयिष्ये।

तदा लोका एतावत्पर्य्यन्तां तदीयां कथां श्रुत्वा प्रोच्चैरकथयन् २२
एनं भूमण्डलाद् दूरीकुरु, एतादृशजनस्य जीवनं नोचितम्। इत्युच्चैः २३
कथयित्वा वसनानि परित्यज्य गगणं प्रति धूलीरक्षिपन् ततः सहस्रसेना-
पतिः पौलं दुर्गाभ्यन्तर नेतुं समादिशत्; अपरम् एतस्य प्रतिकूलाः सन्तो २४
लोकाः किन्निमित्तम् एतावदुच्चैःस्वरम् अकुर्व्वन् एतद् वेत्तुं तं दुर्गम्
आनीय कशया प्रहृत्य तस्य परीक्षां कर्त्तुमादिशत्। पदातयश्चर्म्मनि- २५
र्म्मितरज्ज्वा तस्य बन्धनं कर्त्तुमुद्यतास्तदानीं पौलः सम्मुखस्थितं शतसेना-
पतिम् उक्तवान् अदण्डाज्ञप्तं रोमिलोकं प्रहर्त्तुं किं युष्माकम् अधिका-
रोस्ति? एनां कथां श्रुत्वा स सहस्रसेनापतेः सन्निधिं गत्वा तां वार्त्तामवदत् २६
स रोमिलोक एतस्मात् सावधानः सन् कर्म्म कुरु। तस्मात् सहस्रसेना- २७
पति र्गत्वा तमप्राक्षीत् त्वं किं रोमिलोकः? इति मां ब्रूहि। सोऽकथयत्

२८ सत्यम्। ततः सहस्रसेनापतिः कथितवान् बहुद्रविणं दत्त्वाहम् इदमाधि-
२९ पत्यं प्राप्तवान्; किन्तु पौलः कथितवान् अहं जनुना प्राप्तवान्। इत्थं सति
ये प्रहारेण तं परीक्षितुं समुद्यता आसन् ते तस्य समीपात् प्रातिष्ठन्त;
अपरं सहस्रसेनापतिस्तं रोमिलोकं विज्ञाय स्वयं यत् तस्य बन्धनम्
अकार्षीत् तत्कारणाद् अबिभेत्।
३०　तदनन्तरं यिहूदीयलोकाः पौलं कुतोऽपवदन्ते तस्य वृत्तान्तं ज्ञातुं
वाञ्छन् सहस्रसेनापतिः परेऽहनि पौलं बन्धनान् मोचयित्वा प्रधानयाज-
कान् महासभायाः सर्व्वलोकांश्च समुपस्थातुम् आदिश्य तेषां सन्निधौ पौलम्
अवरोह्य स्थापितवान्।

---

२३ त्रयोविंशोऽध्यायः।

१ पौलस्य विचारितत्वं तं चपेटेनाहन्तुं महायाजकस्याज्ञापनम् अपवादकानां भेदः १२ तं हन्तुं चत्वारिंशज्जनानां प्रतिज्ञानं १६ तस्य भागिनेयेन तत्कथायाः सहस्रसेनापतेः समीपे प्रकाशितत्वं तेन पौलस्य मुक्तिः २१ फीलिक्षं प्रति पौलस्य प्रेषणञ्च।

१　अपरञ्च सभासदलोकान् प्रति पौलोऽनन्यदृष्ट्या पश्यन् अकथयत् हे
भ्रातृगणा अद्य यावत् सरलेन सर्व्वान्तःकरणेनेश्वरस्य साक्षाद् आचरामि।
२ अनेन हनानीयनामा महायाजकस्तं कपोले चपेटेनाहन्तुं समीपस्थ-
३ लोकान् आदिष्टवान्। तदा पौलस्तमवदत्, हे वहिष्परिष्कृत, ईश्वरस्त्वां
प्रहर्त्तुम् उद्यतोस्ति यतो व्यवस्थानुसारेण विचारयितुम् उपविश्य व्यवस्थां
४ लङ्घित्वा मां प्रहर्त्तुम् आज्ञापयसि। ततो निकटस्था लोका अकथयन् त्वं
५ किम् ईश्वरस्य महायाजकं निन्दसि? ततः पौलः प्रतिभाषितवान् हे भ्रातृ-
गण महायाजक एष इति न बुद्धं मया तदन्यच्च स्वलोकानाम् अधिपतिं
६ प्रति दुर्व्वाक्यं मा कथय, एतादृशी लिपिरस्ति। अनन्तरं तेषाम् अर्द्धं
सिदूकिलोका अर्द्धं फिरूशिलोका इति दृष्ट्वा प्रोच्चैः सभास्थलोकान् अव-
दत् हे भ्रातृगणा अहं फिरूशीमतावलम्बी फिरूशिनः सन्तानश्च मृतलोका-
७ नाम् उत्थाने प्रत्याशाकरणाद् एतस्मिन् विचारे पतितोहं। इतिकथायां
कथितायां फिरूशीसिदूकिनोः परस्परं भिन्नवाक्यत्वात् सभाया मध्ये द्वौ
८ संघौ जातौ। यतः सिदूकिलोका उत्थानं स्वर्गीयदूत आत्मा च सर्व्वेषाम्

एषां कमपि न मन्यन्ते किन्तु फिरूशिः सर्व्वम् अङ्गीकुर्व्वन्ति। ततः पर-
स्परम् अतिशयकोलाहले समुपस्थिते फिरूशीनां पक्षीयाः सभास्था अध्या-
पकाः सर्व्वे प्रतिपक्षा उत्तिष्ठन्तो ऽकथयन् एतस्य मानवस्य कमपि दोषं न
पश्यामः; यदि कश्चिद् आत्मा वा कश्चिद् दूत एनं प्रत्यादिशत् तर्हि वयम्
ईश्वरस्य प्रातिकूल्येन न योत्स्यामः। तस्माद् अतीव भिन्नवाक्यत्वे सति ते १०
पौलं खण्डं खण्डं करिष्यन्तीत्याशङ्कया सहस्रसेनापतिस्तत्स्थानं यातुं
सभाता बलात् पौलं धृत्वा दुर्गं नेतुञ्च सेनागणम् आज्ञापयत्। अनन्तरं ११
रात्रौ प्रभुस्तस्य समीपे तिष्ठन् कथितवान्, हे पौल निर्भयो भव यथा यिरू-
शालमनगरे मयि साक्ष्यं दत्तवान् तथा रोमानगरेऽपि त्वया दातव्यम्।

अनन्तरं दिने समुपस्थिते सति कियन्तो यिहूदीयलोका एकमन्त्रणाः १२
सन्तः पौलं न हत्वा भोजनपाने न करिष्याम इति शपथेन स्वान् अबध्नन्।
चत्वारिंशज्जनेभ्योऽधिका लोका इति पणम् अकुर्व्वन्। ततः परं ते महा- १३
याजकानां प्राचीनलोकानाञ्च समीपं गत्वाकथयन्, वयं पौलं न हत्वा १४
किमपि न भोक्ष्यामहे दृढेनानेन शपथेन बद्धा अभवाम। अतएव साम्प्रतं १५
सभासद्लोकैः सह यूयं तस्मिन् कञ्चिद् विशेषविचारं कर्त्तुं छलं कृत्वा
श्वो युष्माकं समीपं तम् आनेतुं सहस्रसेनापतये निवेदनं कुरुत तेन
युष्माकं समीप उपस्थितेः पूर्व्वं वयं तं हन्तुं सज्जिष्यामहे।

तदा पौलस्य भागिनेयस्तेषामिति मन्त्रणां विज्ञाय दुर्गं गत्वा तां १६
वार्त्तां पौलम् उक्तवान्। तस्मात् पौल एकं शतसेनापतिम् आहूय वाक्य- १७
मिदम् भाषितवान् सहस्रसेनापतेः समीपेऽस्य युवमनुष्यस्य किञ्चिन्नि-
वेदनम् आस्ते तस्मात् तत्सविधम् एनं नय। ततः स तमादाय सहस्रसेना- १८
पतेः समीप उपस्थाय कथितवान् भवतः समीपेऽस्य किमपि निवेदनमास्ते
तस्मात् वन्दिः पौलो मामाहूय भवतः समीपम् एनम् आनयितुं प्रार्थि-
तवान्। तदा सहस्रसेनापतिस्तस्य हस्तं धृत्वा निर्जनस्थानं नीत्वा पृष्टवान् १९
तव किं निवेदनं? तत् कथय। ततः सोकथयत्, यिहूदीयलोकाः पौले २०
कर्म्मपि विशेषविचारं छलं कृत्वा तं सभां नेतुं भवतः समीपे निवेदयितुं

२१ अमन्त्रयन्; किन्तु भवता तत्र स्वीकर्त्तव्यं यतस्तेषां मध्यवर्त्तिनश्चत्वा-
रिंशज्जनेभ्यो ऽधिकलोका एकमन्त्रणाः सन्तः पौलं न हत्वा भोजनं पानञ्च
न करिष्याम इतिशपथेन बद्धाः सन्तो घातकाइव सज्जिताः सन्त
२२ इदानीं केवलं भवतो ऽनुमतिम् अपेक्षन्ते। यामिमां कथां त्वं निवे-
दितवान् तां कस्मैचिदपि मा कथयेत्युक्त्वा सहस्रसेनापतिस्तं युवानं
२३ विसृष्टवान्। अनन्तरं सहस्रसेनापति र्द्वौ शतसेनापती आहूयेदम् आदि-
शत् युवां रात्रौ प्रहरैकावशिष्टायां सत्यां कैसरियानगरं यातुं पदाति-
सैन्यानां द्वे शते घोटकारोहिसैन्यानां सप्ततिं शक्तिधारिसैन्यानां द्वे शते च
२४ जनान् सज्जितान् कुरुतं। अपरं पौलम् आरोह्य फीलिक्षाधिपतेः
२५ समीपं निर्व्विघ्नं नेतुं वाहनानि समुपस्थापयतं। अनन्तरं पत्रं लिखित्वा
२६ दत्तवान् तल्लिखितमेतत्; महामहिमश्रीयुक्तफीलिक्षाधिपतये क्लौदिय-
२७ लुषियस्य नमस्कारः। यिहूदीयलोकाः पूर्व्वम् एनं मानवं धृत्वा स्वहस्तै
र्हन्तुम् उद्यता एतस्मिन्नन्तरे ससैन्योऽहं तत्रोपस्थाय एष जन रोमीति
२८ विज्ञाय तं रक्षितवान्। ततः परं किन्निमित्तं ते तमपवदन्ते तज्ज्ञातुं
२९ तेषां सभां तमानायितवान्। ततस्तेषां व्यवस्थाया विरुद्धया कयाचन-
कथया सोऽपवादितोऽभवत् किन्तु स शृङ्खलबन्धनार्हो वा प्राणनाशार्हो
३० भवतीदृशः कोप्यपराधो न मयास्य दृष्टः। तथापि मनुष्यस्यास्य बधार्थं
यिहूदीया घातकाइव सज्जिता एतां वार्त्तां श्रुत्वा तत्क्षणात् तव समीप-
मेनं प्रेषितवान् अस्यापवादकांश्च तव समीपं गत्वापवदितुम् आज्ञापयम्।
भवतः कुशलं भूयात्।

३१ अनन्तरं सैन्यगण आज्ञानुसारेण पौलं गृहीत्वा तस्यां रजन्याम् आन्ति-
३२ पात्रिनगरम् आनयत्। परेऽहनि तेन सह यातुं घोटकारूढसैन्यगणं
३३ स्थापयित्वा परावृत्य दुर्गं गतवान्। ततः परं घोटकारोहिसैन्यगणः कैस-
रियानगर उपस्थाय तत्पत्रम् अधिपतेः करे समर्प्य तस्य समीपे पौलम्
३४ उपस्थापितवान्। तदाधिपतिस्तत्पत्रं पठित्वा पृष्टवान् एष किं प्रदेशीयो
जनः? स किलिकियाप्रदेशीय एकोजन इति ज्ञात्वा कथितवान् तवाप-

वादकगण आगते तव कथां श्रोष्यामि। अनन्तरं हेरोदोराजगृहे तं ३५
स्थापयितुम् आदिष्टवान्।

---

२४ चतुर्विंशोऽध्यायः।

१ फीलिक्षस्य समक्षं पौलस्य विचारः, तस्यापवादकानां कथा १० पौलस्योत्तरं २२
तद्विचारस्य विलम्बनं २४ फीलिक्षेण सह भार्य्यया च पौलस्य कथोपकथनञ्च।

तदनन्तरं पञ्चभ्यो दिनेभ्यः परं हनानीयनामा महायाजकोऽधिपतेः १
समक्षं पौलस्य प्रातिकूल्येन निवेदयितुं तर्तुल्लनामानं कञ्चन वक्तारं
प्राचीनजनांश्च सङ्गिनः कृत्वा कैसरियानगरम् आगच्छत्। ततः पौले २
समानीते सति तर्तुल्लस्तस्यापवादकथां कथयितुम् आरभत हे महाम-
हिमफीलिक्ष भवतो वयम् अतिनिर्व्विघ्नं कालं यापयामो भवतः परि-
णामदर्शितया एतद्देशीयानां बहूनि मङ्गलानि घटितानि, इतिहेतो- ३
रतिकृतज्ञाः सन्तः सर्व्वत्र सर्व्वदा भवतो गुणान् गायामः। किन्तु बहुभिः ४
कथाभि र्भवन्तं येन न विरञ्जयामि तस्माद् विनये भवान् अनुकम्प्य
मदल्पकथां शृणोतु। एष महामारीस्वरूपो नासिरीयमतग्राहिसघातस्य ५
मुख्यो भूत्वा सर्व्वदेशेषु सर्व्वेषां यिहूदीयानां राजद्रोहाचरणप्रवृत्तिजनको
ऽस्माभिः प्राप्तः। स मन्दिरम् अपि अशुचि कर्त्तुं चेष्टितवान्; इतिकारणाद् ६
वयम् एनं धृत्वा स्वव्यवस्थानुसारेण विचारयितुं प्रावर्त्तामहि; किन्तु ७
लुसियः सहस्रसेनापतिरागत्य बलाद् अस्माकं करेभ्य एनं गृहीत्वा एतस्या-
पवादकान् भवतः समीपम् आगन्तुम् आज्ञापयत्। वयं यस्मिन् तमपव- ८
दामो भवता तदपवादकथायां विचारितायां सत्यां सर्व्वं वृत्तान्तं वेदितुं
शक्ष्यते। ततो यिहूदीयास्व स्वीकृत्य कथितवन्त एषा कथा प्रमाणम्। ९

ततः परम् अधिपतौ कथां कथयितुं पौलं प्रतीङ्गितं कृतवति १०
स कथितवान् भवान् बहून् वत्सरान् यावद् एतद्देशस्य शासनं करो-
तीति विज्ञाय प्रत्युत्तरं दातुम् अक्षोभोऽभवम्। अद्य केवलं द्वादश ११
दिनानि यातानि, अहम् आराधनां कर्त्तुम् यिरूशालमनगरं गतवान्
एतां कथां भवान् ज्ञातवान्; किन्त्विमे मध्येमन्दिरं केनापि सह वितण्डां १२

कुर्व्वन्तं कुत्रापि भजनभवने नगरे वा लोकान् कुप्रवृत्तिं जनयन्तञ्च मां
१३ न दृष्टवन्तः। अपरम् इदानीं यस्मिन् यस्मिन् माम् अपवदन्ते तस्य
१४ किमपि प्रमाणं दातुं न शक्नुवन्ति। किन्तु भविष्यद्वाक्यग्रन्थे व्यवस्था-
ग्रन्थे च या या कथा लिखितास्ते तासु सर्व्वासु विश्वस्य यन्मतम् इमे
विधर्म्मं जानन्ति तन्मतानुसारेणाहं निजपितृपुरुषाणाम् ईश्वरम् आरा-
१५ धयामीत्यहं भवतः समक्षम् अङ्गीकरोमि। अपरञ्च धार्म्मिकाणाम्
अधार्म्मिकाणाञ्च प्रमीतलोकानामेवोत्थानं भविष्यतीति कथामिमे
१६ स्वीकुर्व्वन्ति तथाहमपि तस्मिन् ईश्वरे प्रत्याशां कृतवान्; ईश्वरस्य
मानवस्य च समीपे यथा निर्दोषो भवामि तदर्थं सततं यत्नवान् आसे।
१७ अपरञ्च बहुषु वत्सरेषु गतेषु स्वदेशीयलोकानां निमित्तं दानीयद्रव्याणि
१८ नैवेद्यञ्च समादाय पुनरागमनं कृतवान्। ततोहं शुचि भूत्वा लोकानां
समागमं कलहं वा न कारितवान् तथाप्याशियादेशीयाः कियन्तो
१९ यिहूदीयलोका मध्येमन्दिरं मां धृतवन्तः। ममोपरि यदि कस्यचिद-
पवादस्य कथास्ति तर्हि भवतः समीप उपस्थाय तेषां साक्ष्यदानम्
२० उचितम्; नोचेत् पूर्व्वं महासभास्थानां लोकानां सन्निधौ मम दण्डायमा-
नत्वसमये, अहमद्य मृतानामुत्थाने युष्माभि र्विचारितोस्मि, तेषां मध्ये
२१ तिष्ठन्नहं यामिमां कथामुच्चैः स्वरेण कथितवान् तदन्यो मम कोपि दोषो
ऽलभ्यत न वेति वरम् एते समुपस्थितलोका वदन्तु।

२२ तदा फीलिक्ष एतां कथां श्रुत्वा तन्मतस्य विशेषवृत्तान्तं विज्ञातुं
विचारं स्थगितं कृत्वा कथितवान् लुषिये सहस्रसेनापतौ समायाते सति
२३ युष्माकं विचारम् अहं निष्पादयिष्यामि। अनन्तरं बन्धनं विना पौलं
रक्षितुं तथा तं सेवितुं साक्षात् कर्त्तुं वा तदीयात्मीयबन्धुजनान् न
वारयितुं शतसेनापतिमेकम् आदिष्टवान्।

२४ अल्पदिनात् परं फीलिक्षोऽधिपति र्द्रुषिल्लानाम्ना यिहूदीयया स्वभा-
र्य्यया सहागत्य पौलमाहूय तस्य मुखात् ख्रीष्टधर्म्मस्य वृत्तान्तम् अश्रौषीत्।
२५ अपरं पौलेन न्यायस्य परिमितभोगस्य चरमविचारस्य च कथायां

कथितायां सत्यां फीलिक्षः कम्पमानः सन् व्याहरद् इदानीं याहि, अहम्
अवकाशं प्राप्य त्वाम् आह्वास्यामि। अपरञ्च पौलेन कतिपयमुद्रासु दत्तासु २६
सतीषु तमहं मोचयिष्यामीति प्रत्याशां कृत्वा स पुनः पुनस्तमाहूय तेन साकं
कथोपकथनं कृतवान्। किन्तु वत्सरद्वयात् परं पर्किय्फीष्टे फीलिक्षस्य २७
पदं प्राप्ते सति फीलिक्षो यिहूदीयान् सन्तुष्टान् चिकीर्षन् पौलं बद्धं
संस्थाप्य गतवान्।

---

## २५ पञ्चविंशोऽध्यायः।

१ फीलिक्षस्य विनिमयेन फीष्टेऽधिपतौ सति पौलस्य पुनर्विचारः १३ आग्रिप्प राजस्य सन्निधौ फीष्टद्वारा पौलस्य कथायाः प्रकाशः २३ आग्रिप्पफीष्टाभ्यां पौलस्य पुनर्विचारः तस्मिन् फीष्टस्य कथा च।

अनन्तरं फीष्टो निजराज्यम् आगत्य दिनत्रयात् परं कैसरियातो १
यिरूशालमनगरम् आगमत्। तदा महायाजको यिहूदीयानां प्रधान- २
लोकाश्च तस्य समक्षं पौलम् अपावदन्त; अपरं पौलं हन्तुं गोपनेन घातकान् ३
नियोज्य, फीष्टो यथा तं यिरूशालमम् आनयति तदर्थं विनीय तत्त इमम्
अनुग्रहं वाञ्छितवन्तः। फीष्ट उत्तरं दत्तवान् पौलः कैसरियायां स्थास्यति ४
पुनरल्पदिनात् परम् अहं तत्र यास्यामि। ततस्तस्य मानुषस्य यदि कश्चिद् ५
अपराधस्तिष्ठति तर्हि युष्माकं ये शक्नुवन्ति ते मया सह तत्र गत्वा तम्
अपवदन्ताम् एतां कथां कथितवान्। अपरञ्च दशदिवसेभ्योऽधिकं ६
विलम्ब्य फीष्टस्तस्मात् कैसरियानगरं गत्वा परस्मिन् दिवसे विचारासन
उपविश्य पौलम् आनेतुम् आज्ञापयत्। ततः पौले समुपस्थिते सति ७
यिरूशालमनगराद् आगता यिहूदीयलोकास्तं चतुर्दिशि संवेष्ट्य तस्य
विरुद्धं बहून् महादोषान् उत्थापितवन्तः किन्तु तेषां किमपि प्रमाणं
दातुं न शक्नुवन्तः। ततः परं पौलः स्वस्मिन् उत्तरमिदम् उदितवान् यिहू- ८
दीयानां व्यवस्थाया मन्दिरस्य कैसरस्य वा प्रतिकूलं किमपि कर्म्म नाहं
कृतवान्। किन्तु फीष्टो यिहूदीयान् सन्तुष्टान् कर्तुम् अभिलषन् पौलम् ९
अभाषत त्वं किं यिरूशालमं गत्वास्मिन् अभियोगे मम साक्षात् विचा-

१० रितो भविष्यसि? ततः पौल उत्तरं प्रोक्तवान् यत्र मम विचारो भवितुं
योग्यः कैसरस्य तत्र विचारासन एव समुपस्थितोस्मि; अहं यिहूदी-
यानां कामपि हानिं नाकार्षम् इति भवान् यथार्थतो विजानाति।
११ कञ्चिदपराधं किञ्चन बधार्हं कर्म्म वा यद्यहम् अकरिष्यं तर्हि प्राणहनन-
दण्डमपि भोक्तुम् उद्यतोऽभविष्यं किन्तु ते मम यमपवादं कुर्व्वन्ति स
यदि कल्पितमात्रो भवति तर्हि तेषां करेषु मां समर्पयितुं कस्याप्यधि-
१२ कारो नास्ति कैसरस्य निकटे मम विचारो भवतु। तदा फीष्टो मन्त्रिभिः
सार्द्धं संमन्त्र्य पौलाय कथितवान् कैसरस्य निकटे किं तव विचारो भवि-
ष्यति? कैसरस्य समीपं गमिष्यसि।
१३ तदनन्तरं कियद्दिनेभ्यः परम् आग्रिप्पराजा बर्णीकी च फीष्टं साक्षात्
१४ कर्त्तुं कैसरियानगरम् आगतवन्तौ। तदा तौ बहुदिनानि तत्र स्थितौ
ततः फीष्टस्तं राजानं पौलस्य कथां विज्ञाप्य कथयितुम् आरभत
१५ पौलनामानम् एकं बन्दिं फीलिक्षो बद्धं संस्थाप्य गतवान्। अपरं यिरू-
शालमि मम स्थितिकाले महायाजको यिहूदीयानां प्राचीनलोकाश्च
१६ तम् अपोद्य तत्प्रति दण्डाज्ञां प्रार्थयन्त। ततोहम् इत्युत्तरम् अवदं यावद्
अपोदितो जनः स्वापवादकान् साक्षात् न करोति तथा स्वस्मिन्
योपराध आरोपितस्तस्य प्रत्युत्तरं दातुम् अवकाशञ्च न प्राप्नोति ताव-
त्कालं कस्यापि मानुषस्य प्राणनाशाज्ञापनं रोमिलोकानां रीति र्नहि।
१७ ततस्तेष्वत्र स्थान आगतेषु परस्मिन् दिवसेऽहम् अविलम्बं विचारासन
१८ उपविश्य तं मानुषम् आनेतुम् आज्ञापयम्। तदनन्तरं तस्यापवादका
उपस्थाय यादृशम् अहं चिन्तितवान् तादृशं कञ्चनमहापवादं नोत्थाप्य
१९ स्वेषां मते तथा पौलो यं सजीवं वदति तस्मिन् यीशुनामनि मृत-
२० जने च तस्य विरुद्धं कथितवन्तः। ततोहं तस्मिन् संशयानः सन्
कथितवान् त्वं यिरूशालमं गत्वा किमत्र विचारितो भवितुम् इच्छसि?
२१ तदा पौलो महाराजस्य निकटे विचारितो भवितुं प्रार्थयत तस्माद्
यावत्कालं तं कैसरस्य समीपं प्रेषयितुं न शक्नोमि तावत्कालं तमत्र

स्थापयितुम् आदिष्टवान्। तत आग्रिप्पः फीष्टम् उक्तवान् अहमपि तस्य २२
मानुषस्य कथां श्रोतुम् अभिलषामि। तदा फीष्टो व्याहरत् श्वस्तदीयां
कथां त्वं श्रोष्यसि।

परस्मिन् दिवसे आग्रिप्पो वर्णिकी च महासमागमं कृत्वा प्रधान- २३
वाहिनीपतिना नगरस्थप्रधानलोकैश्च सहमिलित्वा राजगृहमागत्य समु-
पस्थितौ तदा फीष्टस्याज्ञया पौल आनीतोऽभवत्। तदा फीष्टः कथितवान् २४
हे राजन् आग्रिप्प हे उपस्थिताः सर्व्वे लोका यिरूशालमनगरे
यिहूदीयलोकसमूहो यस्मिन् मानुषे मम समीपे निवेदनं कृत्वा प्रोच्चैः
कथामिमां कथितवान् पुनरल्पकालमपि तस्य जीवनं नोचितं तमेतं
मानुषं पश्यत। किन्त्वेष जनः प्राणनाशार्हं किमपि कर्म्म न कृतवान् २५
इत्यजानां तथापि स महाराजस्य सन्निधौ विचारितो भवितुं प्रार्थयत
तस्मात् तस्य समीपं तं प्रेषयितुं मतिम् अकरवम्। किन्तु श्रीयुक्तस्य समीपम् २६
एतस्मिन् किं लेखनीयम् इत्यस्य कस्यचिन् निर्णयस्य न जातत्वात् एतस्य
विचारे सति यथाहं लिखितुं किञ्चन निश्चितं प्राप्नोमि तदर्थं युष्माकं
समक्षं विशेषतो हे आग्रिप्प राजन् भवतः समक्षम् एनम् आनयं।
यतो बन्दिः प्रेषणसमये तस्याभियोगस्य किञ्चिदलिखनम् अहम् २७
अयुक्तं जानामि।

---

२६ षड्विंशोऽध्यायः।

१ आग्रिप्पं प्रति पौलस्योत्तरं २४ फीष्टेन तस्योन्मत्तत्ववदनं तं प्रति पौलस्योत्तरं
फीष्टेन तस्य निरपराधत्ववदनं राज्ञः कैसरस्य समीपं यातुं तस्याज्ञापनञ्च।

तत आग्रिप्पः पौलम् अवादीत् निजां कथां कथयितुं तुभ्यम् १
अनुमति र्दीयते। तस्मात् पौलः करं प्रसार्य्य स्वस्मिन् उत्तरम् अवादीत्।
हे राजन् आग्रिप्प यत्कारणाद् यिहूदीयैरपवादितोऽहम् अभवं तस्य २
वृत्तान्तम् अद्य भवतः साक्षान् निवेदयितुमनुमतोऽहम् इदं स्वीयं परमं
भाग्यं मन्ये; यतो यिहूदीयलोकानां मध्ये या या रीतिः सूक्ष्मविचाराश्च ३
सन्ति तेषु भवान् विज्ञतमः; अतएव प्रार्थये धैर्य्यमवलम्ब्य मम निवेदनं

४ शृणोतु। अहं यिरूशालमनगरे स्वदेशीयलोकानां मध्ये तिष्ठन् आ यौ-
वनकालात् यद्रूपम् आचरितवान् तद् यिहूदीयलोकाः सर्व्वे विदन्ति।
५ अस्माकं सर्व्वेभ्यः शुद्धतमं यत् फिरूशीयमतं तदवलम्बी भूत्वाहं कालं
यापितवान् ये जना आ बाल्यकालान् मां जानन्ति त एतादृशं साक्ष्यं
६ यदि ददति तर्हि दातुं शक्नुवन्ति। किन्तु हे राजन् आग्रिप्प ईश्वरो-
ऽस्माकं पूर्व्वपुरुषाणां निकटे यद् अङ्गीकृतवान् तस्य प्रत्याशाहेतोरहम्
७ इदानीं विचारस्थाने दण्डायमानोस्मि। तस्याङ्गीकारस्य फलं प्राप्तुम् अस्माकं
द्वादशवंशा दिवानिशं महायत्नाद् ईश्वरसेवनं कृत्वा यां प्रत्याशां कुर्व्वन्ति
८ तस्याः प्रत्याशाया हेतोरहं यिहूदीयैरपवादितोऽभवम्। ईश्वरो मृतान्
९ उत्थापयिष्यतीति वाक्यं युष्माकं निकटेऽसम्भवं कुतो भवति? नासरीय-
यीशो र्नाम्नो विरुद्धं नानाप्रकारप्रतिकूलाचरणम् उचितम् इत्यहं मनसि
१० यथार्थं विज्ञाय यिरूशालमनगरे तदकरवं; फलतः प्रधानयाजकस्य
निकटात् शक्तिं प्राप्य बहून् पवित्रलोकान् कारायां बद्धवान् विशेषत-
११ स्तेषां हननसमये तेषां विरुद्धां निजां सम्मतिं प्रकाशितवान्। अपरं वारं
वारं प्रतिभजनभवनं तेभ्यो दण्डं प्रदत्तवान् बलात् तं धर्म्मं निन्दयितवांश्च
पुनश्च तान् प्रति महाक्रोधाद् उन्मत्तः सन् विदेशीयनगरं यावत् तान्
१२ ताडितवान्। इत्थं प्रधानयाजकस्य समीपात् शक्तिम् आज्ञापत्रञ्च लब्ध्वा
१३ दम्मेषकनगरं गतवान्। तदाहं हे राजन् मार्गमध्ये मध्याह्नकालिकाद्
भास्करतोपि तेजस्वतीं दीप्तिं मम मदीयसङ्गिनां लोकानाञ्च चतसृषु दिक्षु
१४ गगणात् प्रकाशमानां दृष्टवान्। तस्माद् अस्मासु सर्व्वेषु भूमौ पतितेषु
सत्सु हे शौल हे शौल कुतो मां ताडयसि? कण्टकस्य मुखे पादाहननं कर्म्म
तव दुःसाध्यम् इब्रीयभाषया गदित एतादृश एकः शब्दो मया श्रुतः।
१५ तदाहं पृष्टवान् हे प्रभो को भवान्? ततः स कथितवान् यं यीशुं त्वं ताड-
१६ यसि सोहं; किन्तु समुत्तिष्ठ त्वं यद् दृष्टवान् इतः परञ्च यद्यत् त्वां दर्श-
यिष्यामि तेषां सर्व्वेषां कार्य्याणां त्वां साक्षिणं कर्त्तुम् अहं दर्शनम्
१७ अदाम्। विशेषतो यथान्यदेशीयानां पापमोचनं भवति यथा ते मयि

विश्वस्य पवित्रीकृतानां मध्ये भागं प्राप्नुवन्ति तदभिप्रायेण तेषां निजदेशीयानाञ्च लोकानां ज्ञानचक्षूंषि प्रसन्नानि कर्त्तुं तथान्धकाराद् दीप्तिं प्रति तथा शैतानाधिकाराद् ईश्वरं प्रति मतीः परावर्त्तयितुं १८
तेषां समीपं त्वां प्रेष्य तेभ्यो लोकेभ्यस्त्वाम् उद्धारयिष्यामि। हे राजन् १९
आग्रिप्प, एतादृशं स्वर्गीयप्रत्यादेशं अग्राह्यम् अकृत्वाहं प्रथमतो दम्मेषक्नगरे ततो यिरूशालमि सर्व्वस्मिन् यिहूदीयदेशे च ततोन्येषु २०
देशेषु येन लोका मतीः परावर्त्तयन्ते ईश्वरं प्रति परावर्त्तन्ते मनःपरावर्त्तनयोग्यानि कर्म्माणि च कुर्व्वन्ति तादृशम् उपदेशं प्रचारितवान्। एतत्कारणाद् यिहूदीया मध्येमन्दिरं मां धृत्वा हन्तुम् उद्यताः। २१
तथापि ख्रीष्टो दुःखं भुक्त्वा सर्व्वेषां समक्षं श्मशानाद् उत्थाय निजदेशी- २२
यानां भिन्नदेशीयानाञ्च समीपे दीप्तिं प्रकाशयिष्यति ; भविष्यद्वादिगणो २३
मूसाश्च भाविकार्य्यस्य यदिदं प्रमाणम् अददुरेतद् विनान्यां कथां न कथयित्वा ईश्वराद् अनुग्रहं लब्ध्वा महतां क्षुद्राणाञ्च सर्व्वेषां समीपे प्रमाणं दत्वाद्ययावत् तिष्ठामि।

तदा तस्येमां कथां निशम्य फीष्ट उच्चैः स्वरेण कथितवान् हे पौल त्वम् २४
उन्मत्तोसि बहुविद्याभ्यासेन त्वं हतज्ञानः कृतः। तदा स उक्तवान् हे २५
महामहिम फीष्ट नाहम् उन्मत्तः किन्तु सत्यं विवेचनीयञ्च वाक्यं प्रस्तौमि। यस्य साक्षाद् अक्षोभः सन् कथां कथयामि स राजा २६
तद्वृत्तान्तं जानाति तस्य समीपे किमपि गुप्तं नेति मया निश्चितं बुध्यते यतस्तद् विजने न कृतं। हे राजन् आग्रिप्प भवान् किं भवि- २७
ष्यद्वादिगणोक्तानि वाक्यानि प्रत्येति? भवान् प्रत्येति तदहं जानामि।
तदा आग्रिप्पः पौलम् अभिहितवान् त्वं प्रवृत्तिं जनयित्वा प्रायेण २८
मामपि ख्रीष्टीयं करोषि। ततः सोवादीत् भवान् ये ये लोकाश्च २९
मम कथाम् अद्य शृण्वन्ति ते सर्व्वे प्रायेण इति नहि किन्त्वेतत्-शृङ्खलबन्धनं विना सर्व्वथा यथा मादृशा भवन्तीतीश्वरस्य समीपे प्रार्थये ऽहम्। एतस्यां कथायां कथितायां स राजा सोधिपति र्वर्णिकी ३०

३१ सभास्था लोकाश्च तस्माद् उत्थाय गोपने परस्परं विविच्य कथितवन्त
एष जनो बन्धनार्हं प्राणहननार्हं वा किमपि कर्म्म नाकरोत्। तत
३२ आग्रिप्पः फीष्टम् अवदत्, यद्येष मानुषः कैसरस्य निकटे विचारितो
भवितुं न प्रार्थयिष्यत तर्हि मुक्तो भवितुम् अशक्ष्यत्।

---

२७ सप्तविंशोऽध्यायः।

१ पौलस्य रोमानगरंगमनं ७ समुद्रमार्गे प्रचण्डपवनः २१ पौलस्योपदेशकथा पोतीयलोकानां कर्म्म च ३९ पोतभञ्जनम् उपद्वीपतीरे लोकानामुत्तरणञ्च।

१ अनन्तरं जलपथेनास्माकम् इतालियादेशं प्रति यात्रायां निश्चितायां सत्यां
ते यूलियनाम्नो महाराजस्य संघातान्तर्गतस्य सेनापतेः समीपे पौलं तदन्यान्
२ कतिपयजनांश्च समार्पयन्। अनन्तरम् आद्रामुत्तीयं पोतमेकम् आरुह्य
आशियादेशस्य तटसमीपेन यातुं मतिं कृत्वा लङ्गरम् उत्थाप्य वयं पोतम्
अमोचयाम; अपरं माकिदनियादेशान्तर्गतथिषलनीकीनिवास्यारि-
३ स्तार्खनामा कश्चिद् जनोऽस्माभिः सार्द्धम् आसीत्। तदनन्तरं परस्मिन्
दिवसे ऽस्माभिः सीदोन्नगरे पोते लागिते तत्र यूलियः सेनापतिः पौलं
प्रति सौजन्यं प्रदर्श्य तापनाशाय बन्धुबान्धवान् उपयातुम् अनुमतिं दत्तवान्।
४ अनन्तरं तस्मात् पोते मोचिते सति सम्मुखवायोः सम्भवाद् वयं कुप्रोपद्वी-
५ पस्य तीरसमीपेन गतवन्तः। ततः परं किलिकियायाः पाम्फूलियायाश्च
६ समुद्रस्य पारं गत्वा लूकियादेशान्तर्गते मुरानगर उपातिष्ठाम। अनन्तरम्
इतालियादेशं गच्छति यः सिकन्दरियानगरस्य पोतस्तं तत्र प्राप्य शत-
सेनापतिस्तं पोतम् अस्मान् आरोहयत्।

७ ततः परं बहूनि दिनानि शनैः शनैः गत्वा क्नीदपार्श्व उपस्थितेः पूर्व्वं प्रति-
कूलेन पवनेन वयं सल्मोन्याः सम्मुख उपस्थाय क्रीत्युपद्वीपस्य तीरसमीपेन
८ गतवन्तः। अनन्तरं कष्टेन तमुत्तीर्य्य लासायानगरस्याधः सुन्दरनाम्नि
९ खात उपातिष्ठाम। अपरञ्च बहुतिथे काले उपवासममयात् परं तोय-
१० मार्गेण गमने जातशङ्कया पौलो विनयेन कथितवान् हे महेच्छा अहं
निश्चयं जानामि यात्रायामस्याम् अस्माकं विपद् बहूपचयश्च भवि-
ष्यति स केवलस्य पोतस्य पोतस्थद्रव्यस्य चेति नहि किन्त्वस्माकं प्राणा-

नामपि। तदा शतसेनापतिः पौलोक्तवाक्यतोपि पोतवाहस्य पोतवणि- ११
जश्च वाक्यं बहुमान्यं कृतवान्। अपरञ्च तत् खातं शीतकाले वासार्हस्थानं १२
न तस्माद् नैर्ऋतीवायव्ययोर्विदिशोः क्रीत्यः फैनीकियखातं गत्वा यदि
शक्नुवन्तस्तर्हि शीतकालं यापयितुं प्रायेण सर्व्वे मन्त्रितवन्तः। ततः परं १३
दक्षिणे मन्दं मन्दं वायुं वहन्तं दृष्ट्वा निजाभिप्रायस्य सिद्धेः सुयोगो
भवतीति बुद्ध्वा पोतं मोचयित्वा क्रीत्युपद्वीपस्य तीरसमीपेन चलित-
वन्तः। किन्त्वल्पक्षणात् परमेव उरक्रुदोन्नामा प्रचण्डो वायु र्वहन् १४
पोतेऽलगीत् तस्याभिमुखं गन्तुम् पोतस्याशक्तत्वाद् वयं वायुना १५
स्वयं नीताः। अनन्तरं क्लौदीनाम्न उपद्वीपस्य कूलसमीपेन पोतं गम- १६
यित्वा बहुना कष्टेन क्षुद्रनावम् अरक्षाम। तदनन्तरं ते तानारुह्य रज्ज्वा १७
पोतस्याधोभागम् अबध्नन् तदनन्तरं चेत् पोतो सैकते लगतीति
भयाद् वातवसनम् अवारोहयन् इत्थं ते वायुना नीताः। किन्तु १८
क्रमशो वायोः प्रबलत्वात् पोतो दोलायमानोभवत् तस्मात् परस्मिन्
दिवसे पोतस्थानि कतिपयानि द्रव्याणि निक्षिप्तानि। अपरं तृतीय- १९
दिवसे वयं स्वहस्तैः पोतसज्जनद्रव्याणि निक्षिप्तवन्तः। ततो बहु- २०
दिनानि यावत् सूर्य्यनक्षत्रादीनि समाच्छन्नानि ततोऽतीव वात्यागमाद्
अस्माकं प्राणरक्षायाः कापि प्रत्याशा नातिष्ठत्।

बहुदिनान्यनाहारेण स्थितेषु लोकेषु सत्सु सर्व्वेषां साक्षात् पौल- २१
स्तिष्ठन् अकथयत् हे महेच्छाः क्रीत्युपद्वीपात् पोतं न मोचयितुम् अहं
पूर्व्वं यद् अवदं तद्ग्रहणं युष्माकम् उचितम् आसीत् तथा कृते युष्माकम्
एषा विपद् एषोऽपचयश्च नाघटिष्येताम्। किन्तु साम्प्रतं युष्मान् विनीय २२
ब्रवीमि यूयं न क्षुभ्यत युष्माकम् एकस्यापि प्राणिनो हानि र्न भविष्यति
केवलस्य पोतस्य हानि र्भविष्यति। यतो यस्येश्वरस्य लोकोहं यस्य च सेवां २३
करोमि तदीय एको दूतो ह्यो रात्रौ ममान्तिके तिष्ठन् कथितवान् हे २४
पौल मा भैषीः कैसरस्य सम्मुखे त्वयोपस्थातव्यं; अपरं तवैतान् सङ्गिनो
लोकान् ईश्वरस्तुभ्यं दत्तवान्। अतएव हे महेच्छा यूयं न क्षुभ्यत २५
मह्यं या कथाकथि सावश्यं घटिष्यते ममैतादृशो विश्वास ईश्वरे विद्यते

२६ किन्तु कस्यचिद् उपद्वीपस्योपरि पतितव्यम् अस्माभिः। ततः परम्
२७ आद्रियासमुद्रे पोतस्तथैव दोलायमानः सन् इतस्ततो गच्छन् चतुर्दश
दिवसस्य रात्रे द्वितीयप्रहरसमये कस्यचित् स्थलस्य समीप उप-
२८ तिष्ठतीति पोतीयलोका अन्वमिमत। ततस्ते जलं परिमाय तत्र
विंशति व्यामा जलानीति ज्ञातवन्तः। अनन्तरं किञ्चिद्दूरं गत्वा
२९ पुनरपि जलं परिमितवन्तः। तत्र पञ्चाशत् व्यामा जलानि दृष्ट्वा
चेत् पाषाणे लगतीति भयात् पोतस्य पश्चाद्भागे चतुरो लङ्गरान्
३० निक्षिप्य दिवाकरम् अपेक्ष्य सर्व्वे स्थितवन्तः। किन्तु पोतीयलोकाः
पोताग्रभागे लङ्गरनिक्षेपं छलं कृत्वा जलधौ क्षुद्रनावम् अवरोह्य पला-
३१ यितुम् अचेष्टन्त। ततः पौलः सेनापतये सैन्यगणाय च कथितवान् एतेषु
३२ लोकेषु पोते न तिष्ठत्सु युष्माकं रक्षा न भविष्यति। तदा सेनागणो
३३ रज्जुं छित्त्वा नावं जले पतितुम् अददात्। अनन्तरं प्रभातसमये पौलः
सर्व्वान् जनान् भोजनार्थं प्रार्थ्य व्याहरत्, अद्य चतुर्दश दिनानि यावद्
३४ यूयम् अपेक्षां कृत्वा भोजनं पानञ्च न कृत्वा ऽनाहारं कालं यापयथ। अतो
विनयं कृत्वा वदामि किञ्चित् खाद्यद्रव्यं गृह्णीत ततो युष्माकं मङ्गलं भवि-
३५ ष्यति युष्माकं कस्यचित् शिरसः केशैकोपि न नंक्ष्यति। इति व्याहृत्य पौलः
३६ पूपं गृहीत्वेश्वरं धन्यं भाषमाणस्तं भंक्त्वा भोक्तुम् आरब्धवान्। अन
३७ न्तरं सर्व्वे सुस्थिराः खाद्यानि पर्य्यगृह्णन्। अस्माकं पोते षट्सप्तत्यधिके
३८ द्वे शते लोका आसन्। सर्व्वेषु लोकेषु यथेष्टं भुक्तवत्सु पोतस्थान् गोधू-
मान् जलधौ निक्षिप्य तैः पोतस्य भारो लघूकृतः।

३९ तदनन्तरं दिने जातेपि स को देश इति तदा न पर्य्यचीयत; ततः परं
तत्र समतटम् एकं खातं दृष्ट्वा यदि शक्नुमस्तर्हि वयं तस्याभ्यन्तरं पोतं
४० गमयाम इति मतिं कृत्वा ते लङ्गरान् छित्त्वा जलधौ त्यक्तवन्तः। तथा
कर्णबन्धनं मोचयित्वा प्रधानं वातवसनम् उत्तोल्य तीरसमीपं गतवन्तः।
४१ किन्तु द्वयोः समुद्रयोः सङ्गमस्थाने सैकतोपरि पोते निक्षिप्ते ऽग्रभागे
४२ बाधिते पश्चाद्भागे प्रबलतरङ्गोऽलगत् तेन पोतो भग्नः। तस्माद् वन्द-
यस्तेषु बाहुभिस्तरन्तः पलायन्ते इत्याशङ्कया सेनागणस्तान् हन्तुम्

अमन्त्रयत्; किन्तु शतसेनापतिः पौलं रक्षितुं प्रयत्नं कृत्वा तान् तच्चेष्टाया ४३
निवर्त्त्य इत्यादिष्टवान् ये बाहुतरणं जानन्ति तेऽग्र प्रोल्लम्फ्य समुद्रे
पतित्वा बाहुभिस्तीर्त्वा कूलं यान्तु। अपरम् अवशिष्टा जनाः काष्ठं पोतीयं ४४
द्रव्यं वा येन यत् प्राप्यते तदवलम्ब्य यान्तु; इत्थं सर्व्वे भूमिं प्राप्य प्राणै
र्जीविताः।

---

२८ अष्टाविंशोऽध्यायः।

१ उपद्वीपीयासभ्यलोकेभ्योऽनुग्रहप्राप्तिः पौलस्य हस्ताद् दंशकसर्पस्य निक्षेपणं ७ पौलेन पब्लियनाम्नोऽधिपतेरन्येषाञ्च स्वास्थ्यं ११ पोतेन तस्य रोमानगरगमनं मार्गमध्ये भ्रातृगणस्य साक्षात् करणं १६ रोमानगर उपस्थिति यिहूदीयलोकेषु पौलस्य निवेदनं सुसंवादप्रचारणञ्च।

इत्थं सर्व्वेषु रक्षां प्राप्तेषु तत्रत्योपद्वीपस्य नाम मिलीतीति ते ज्ञात- १
वन्तः। ततः परम् असभ्यलोका यथेष्टम् अनुग्रहं कृत्वा वर्त्तमानवृष्टेः २
शीताच्च वह्निं प्रज्वाल्यास्माकम् आतिथ्यम् अकुर्व्वन्। किन्तु पौल इन्धनानि ३
संगृह्य यदा तस्मिन् अग्नौ निरक्षिपत् तदा वह्नेः प्रतापाद् एकः कृष्ण-
सर्पो निर्गत्य तस्य हस्ते दष्टवान्। तेऽसभ्यलोकास्तस्य हस्ते सर्पम् अव- ४
लम्बमानं दृष्ट्वा परस्परम् उक्तवन्त एष जनोऽवश्यं नरहा भविष्यति
यतो यद्यपि जलधे रक्षां प्राप्तवान् तथापि प्रतिफलदायक एनं जीवितुं
न ददाति। किन्तु स हस्तं विधुन्वन् तं सर्पम् अग्निमध्ये निक्षिप्य कामपि ५
क्षतिं नाप्तवान्। ततो विषज्वालाद् एतस्य शरीरं स्फीतं भविष्यति यद्वा ६
हठादयं प्राणान् त्यक्ष्यतीति निश्चित्य लोका बहुक्षणानि यावत् तद्
द्रष्टुं स्थिताः किन्तु तस्य कस्याश्चिद् विपदोऽघटनात् ते तद्विपरीतं
विज्ञाय भाषितवन्त एष कश्चिद् देवो भविष्यति।

तदनन्तरं पब्लियनामा जन एकस्तस्योपद्वीपस्याधिपतिरासीत् ७
तत्र तस्य भूम्यादि स्थितं स जनोऽस्मान् निजगृहं नीत्वा सौजन्यं
प्रकाश्य दिनत्रयं यावद् अस्माकं आतिथ्यम् अकरोत्। तदा तस्य पब्लि- ८
यस्य पिता ज्वरातिसारेण पीड्यमानः सन् शय्यायाम् आसीत्; ततः पौल-
स्तस्य समीपं गत्वा प्रार्थनां कृत्वा तस्य गात्रे हस्तं समर्प्य तं स्वस्थं कृतवान्।

९ इत्थं भूते तद्वीपनिवासिन इतरेऽपि रोगिलोका आगत्य निरामया अभ-
१० वन्। तस्मात्तेऽस्माकम् अतीवसत्कारं कृतवन्तः विशेषतः प्रस्थानसमये
प्रयोजनीयानि नानाद्रव्याणि दत्तवन्तः।

११ इत्थं तत्र त्रिषु मासेषु गतेषु यस्य चिह्नं दियस्कुरी तादृश
एकः सिकन्दरीयनगरस्य पोतस्तस्मिन् उपद्वीपे शीतकालं यापयन्
१२ आसीत् तमेव पोतं वयम् आरुह्य यात्राम् अकुर्म्म। ततः प्रथमतः सुरा-
१३ कूसनगर उपस्थाय तत्र त्रीणि दिनानि स्थिताः। अनन्तरं तस्माद्
आवृत्य रीगियनगर उपस्थितेषु दिनैकस्मात् परं दक्षिणवायौ सानु-
१४ कूल्ये सति परस्मिन् दिवसे पतियलीनगर उपातिष्ठाम। ततोऽस्मासु
तत्रत्यं भ्रातृगणं प्राप्तेषु ते स्वैः सार्द्धम् अस्मान् सप्त दिनानि स्थापयितुम्
१५ अयतन्त। इत्थं वयं रोमानगरम् अगच्छाम तस्मात् तत्रत्या भ्रातृगणो-
ऽस्माकं आगमनवार्त्तां श्रुत्वा आप्पियफरं त्रिपथिकावासान् यावत्
अग्रेसराः सन्तोस्मान् साक्षात् कर्त्तुम् आगमन्; अपरं तेषां दर्शनात्
पौल ईश्वरं धन्यं वदन् अक्षोभो ऽभवत्।

१६ ततःपरम् अस्मासु रोमानगरं गतेषु शतसेनापतिः सर्व्वान् वन्दीन्
प्रधानसेनापतेः समीपे समार्पयत् किन्तु पौलाय स्वरक्षकपदातिना सह
१७ पृथग्वासं कर्त्तुम् अनुमतिं दत्तवान्। अनन्तरं दिनत्रयात् परं पौल-
स्तद्देशस्थान् प्रधानयिहूदिन आहूतवान् ततस्तेषु समुपस्थितेषु स
कथितवान् हे भ्रातृगण निजलोकानां पूर्व्वपुरुषाणां वा रीते र्विप-
रीतं किञ्चन कर्म्माहं नाकरवं तथापि यिरूशालमनिवासिनो लोका मां
१८ वन्दिं कृत्वा रोमिलोकानां हस्तेषु समर्पितवन्तः। अपरं रोमिलोका विचार्य्य
१९ मम प्राणहननार्हं किमपि कारणं न प्राप्य मां मोचयितुम् ऐच्छन्; किन्तु
यिहूदिलोकानाम् आपत्त्या मया कैसरराजस्य समीपे विचारस्य प्रार्थना
कर्त्तव्या जाता नोचेत् निजदेशीयलोकान् प्रति मम कोपि परीवादो नास्ति।
२० एतत्कारणाद् अहं युष्मान् सहितः समक्षं कथोपकथने कर्त्तुं युष्मान्
आह्वयम् इस्रायेल्वंशीयानां प्रत्याशाहेतोरहम् एतेन शृङ्खलेन बद्धो-
२१ ऽभवम्। तदा ते तम् अवादिषु र्यिहूदीयदेशाद् वयं त्वयि किमपि पत्रं न

प्राप्नुम ये भ्रातरः समायातास्तेषां कोपि तव कामपि वार्त्तां नावदत्
अभद्रमपि नाकथयच्च। तव मतं किं? इति वयं त्वत्तः श्रोतुमिच्छामः २२
यद् इदं नवीनं मतमुत्थितं तत् सर्व्वत्र सर्व्वेषां निकटे निन्दितं जातम्
इति वयं जानीमः। अनन्तरं तैस्तदर्थम् एकस्मिन् दिने निरूपिते तस्मिन् २३
दिने बहव एकत्र मिलित्वा पौलस्य वासगृहम् आगच्छन् तस्मात् पौल
आ प्रातःकालात् सन्ध्याकालं यावन् मूसाव्यवस्थाग्रन्थाद् भविष्यद्वादिनां
ग्रन्थेभ्यश्च यीशोः कथाम् उत्थाप्य ईश्वरस्य राज्ये प्रमाणं दत्त्वा तेषां
प्रवृत्तिं जनयितुं चेष्टितवान्। अनन्तरं तस्य कथां केचित् प्रत्यायन् २४
केचित्तु न प्रत्यायन्। एतत्कारणात् तेषां परस्परम् अनैक्यात् सर्व्वे चलित- २५
वन्तः; तथापि पौल एतां कथामेकां कथितवान् पवित्र आत्मा यिशयियस्य
भविष्यद्वक्तु र्वदनाद् अस्माकं पितृपुरुषेभ्य एतां कथां भद्रं कथयामास यथा

२६ 'उपगत्य जनानेतान् त्वं भाषस्व वचस्त्विदं।
कर्णैः श्रोष्यथ यूयं हि किन्तु यूयं न भोत्स्यथ।
नेत्रै र्द्रक्ष्यथ यूयञ्च ज्ञातुं यूयं न शक्ष्यथ।
२७ ते मानुषा यथा नेत्रैः परिपश्यन्ति नैव हि।
कर्णै र्यथा न शृण्वन्ति बुध्यन्ते न च मानसैः।
व्यावर्त्तयत्सु चित्तानि काले कुत्रापि तेषु वै।
मत्तस्ते मनुजाः सुस्था यथा नैव भवन्ति च।
तथा तेषां मनुष्याणां सन्ति स्थूला हि बुद्धयः।
बधिरीभूतकर्णाश्च जाताश्च मुद्रिता दृशः।'

अत ईश्वराद् यत् परित्राणं तस्य वार्त्ता भिन्नदेशीयानां समीपं प्रेषिता २८
अपरं तएव तां ग्रहीष्यन्ति इति यूयं जानीत। एतादृश्यां कथायां २९
कथितायां सत्यां यिहूदिनः परस्परं बहुविचारं कुर्व्वन्तो गतवन्तः।
इत्थं पौलः सम्पूर्णं वत्सरद्वयं यावत् भाटकीये वासगृहे वसन् ये लोका- ३०
स्तस्य सन्निधिम् आगच्छन्ति तान् सर्व्वानेव परिगृह्णन्, निर्विघ्नम् अति- ३१
शयनिःक्षोभम् ईश्वरस्य राज्यस्य कथां प्रचारयन् प्रभौ यीशुख्रीष्टे
कथाः समुपादिशत्। इति॥

# रोमिणः प्रति प्रेरितस्य पौलस्य पत्रं



## १ प्रथमोऽध्यायः।

१ प्रेरितत्वपदे पौलस्य नियोगः ८ रोमानगरे सुसंवादं प्रचारयितुं तस्य गमनेच्छा
१४ सुसंवादेन पुण्यतत्त्वज्ञानयोरुद्भवः २४ सुसंवादेऽज्ञाते सर्व्वपापोत्पत्तेः कथा च।

१ ईश्वरो निजपुत्त्रस्य प्रभोरस्माकं यीशुख्रीष्टस्य यस्मिन् सुसंवादे
भविष्यद्वादिभि र्धर्म्मग्रन्थे प्रतिज्ञाम् अकरोत् तं सुसंवादं प्रचारयितुं
२ पृथक्कृत आहूतः प्रेरितश्च प्रभो र्यीशुख्रीष्टस्य सेवको यः पौलः स
३ रोमानगरस्थान् ईश्वरप्रियान् आहूतान् पवित्रांश्च लोकान् प्रति
४ पत्रं लिखति। असौ ख्रीष्टः शारीरिकसम्बन्धेन दायूदो वंशोद्भवः
पवित्रस्यात्मनः सम्बन्धेन दृढप्रमाणाद् ईश्वरस्य पुत्त्र इति श्मशानात्
५ तस्योत्थानेन प्रतिपन्नं। अपरं येषाम् अन्यदेशीयलोकानां मध्ये ख्रीष्टेन
६ यूयम् आहूतास्ते लोकास्तस्य नाम्नि विश्वस्य निदेशग्राहिणो यथा भवन्ति
७ तदभिप्रायेण यस्माद् वयम् अनुग्रहं प्रेरितत्वपदञ्च प्राप्ता एतादृशो यः प्रभु-
र्यीशुख्रीष्टः स तातोऽस्माकम् ईश्वरश्च युष्मासु शान्तिम् अनुग्रहञ्च क्रियात्।
८ प्रथमतः सर्व्वस्मिन् जगति युष्माकं विश्वासस्य प्रकाशितत्वाद् अहं
युष्माकं सर्व्वेषां निमित्तं यीशुख्रीष्टस्य नाम गृहीत्वा ईश्वरस्य धन्यवादं
९ करोमि। अपरम् ईश्वरस्य प्रसादाद् बहुकालात् परं साम्प्रतं युष्माकं समी-
पम् एकदोत्वा येन यातुं कथमपि सुयोगं प्राप्नोमि, एतदर्थं निरन्तरं युष्माकं
१० नामान्युच्चार्य्य निजासु सर्व्वप्रार्थनासु सर्व्वदा निवेदनं करोमि, एतस्मिन्
यस्येश्वरस्य पुत्त्रस्य सुसंवादप्रचारणेन मनसा सेवां करोमि स मम साक्षी
११ विद्यते। यतो युष्माकं स्थैर्य्यकरणार्थं युष्माकं मम च विश्वासेन वयम् उभये
१२ यथा शान्तियुक्ता भवाम इतिकारणाद् युष्मभ्यं किञ्चित्परमार्थ-
१३ दानदानाय युष्मान् साक्षात् कर्त्तुं मदीया वाञ्छा। हे भ्रातृगण भिन्न-
देशीयलोकानां मध्ये यथा तथा युष्माकं मध्येपि मम श्रमः सफलो
भवति तदभिप्रायेण मुहुर्मुहु र्युष्माकं समीपं गन्तुम् उद्यतोऽभवम् किन्तु

यावद् अद्य तस्मिन् गमने मम विघ्नो भवति, इति यूयं यथाऽज्ञातास्ति-
ष्ठथ तदहम् उचितं न बुध्ये।

अहं सभ्यो ऽसभ्यो वा विद्वान् अविद्वान् वा सर्व्वेषाम् ऋणी १४
विद्ये। अतएव रोमानिवासिलोकानां युष्माकं समीपेपि यथाशक्ति १५
सुसंवादं प्रचारयितुम् अहम् उद्यतोस्मि। यतः ख्रीष्टस्य स सुसंवादो १६
मम लज्जास्पदं नहि स ईश्वरस्य शक्तिस्वरूपः सन् आ यिहूदिनो
ऽन्यदेशिनो यावत् सर्व्वजातीयानां मध्ये यः कश्चिद् विश्वसिति तस्यैव
त्राणं जनयति। यतः प्रत्ययेनेश्वरदत्तं यत् पुण्यं तदेव प्रत्ययं जन- १७
यितुं तत् सुसंवादे प्रकाशते तस्मिन् धर्म्मपुस्तकेपि लिखति यथा पुण्य-
वान् जनो विश्वासेन जीविष्यति। अतएव ये पापकर्म्मणा सत्यतां रुन्धन्ति १८
तेषां सर्व्वेषाम् दुराचाराणाम् अधर्म्माणाञ्च विरुद्धं स्वर्गाद् ईश्वरस्य कोपः
प्रकाशते। यत ईश्वरे यद्यद् ज्ञातव्यं तद् ईश्वरः स्वयं तान् प्रति प्रकाश- १९
यति तस्मात् तेषाम् अगोचरं न भवति। फलतस्तस्यानन्तशक्तीश्वरत्व- २०
प्रभृतिष्वदृश्येष्वपि दृष्टकर्म्मभिः सृष्टिकालावधेस्तानि सम्यग् ज्ञायन्ते तस्मात्
तेषाम् उत्तरदानस्य पन्था नास्ति। अपरम् ईश्वरं ज्ञात्वा अपीश्वरज्ञानेन तं २१
नाद्रियन्त तथा कृतज्ञा अपि न जाताः; तस्मात् तेषां सर्व्वे तर्का विफली-
भूताः, अपरञ्च तेषां विवेकशून्यानि मनांसि तिमिरे मग्नानि। ते स्वान् २२
ज्ञानिनो ज्ञात्वा ज्ञानहीना अभवन् अनश्वरेश्वराय गौरवं न प्रदाय २३
नश्वरमनुष्यपश्वपक्ष्युरोगामिप्रभृतेराकृतिविशिष्टप्रतिमायै तददुः।

इत्थं त ईश्वरस्य सत्यतां मृषा ज्ञापयित्वा सत्यं सच्चिदानन्दं सृष्टि- २४
कर्त्तारं त्यक्त्वा सृष्टवस्तुनः पूजां सेवाञ्च कृतवन्तः; इतिहेतोरीश्वरस्तान् कुक्रि- २५
यायां समर्प्य निजनिजकुचिन्ताभिलाषे स्वं स्वं शरीरं परस्परम् अपमानग्रस्तं
कर्त्तुम् अददात्। ईश्वरेण तेषु क्वभिलाषे समर्पितेषु तेषां योषितः स्वाभा- २६
विकाचरणम् अपहाय विपरीतकृत्ये प्रावर्त्तन्त; तथा पुरुषा अपि २७
स्वाभाविकयोषित्सङ्गमं विहाय परस्परं कामकृशानुना दग्धाः सन्तः
पुमांसः पुंभिः साकं कुकृत्ये समासज्य निजनिजभ्रान्तेरुचितं फलम्

२८ अलभन्त। तेषां स्वेषां मनःस्वीश्वराय स्थानं दातुम् अनिच्छुकत्वाद् ईश्वर-
२९ स्तान् प्रति दुष्टमनस्कत्वम् असङ्गतक्रियत्वञ्च दत्तवान्। अतएव ते सर्व्वे
ऽन्यायो व्यभिचारो दुष्टत्वं लोभो जिघांसा ईर्षा वधो विवादश्चातुरी
३० कुमतिरित्यादिभि र्दुष्कर्म्मभिः परिपूर्णाः सन्तः ; कर्णेजपा अपवादिन
ईश्वरद्वेषका हिंसका अहङ्कारिण आत्मश्लाघिनः कुकर्म्मोत्पादकाः पित्रो-
३१ राज्ञालङ्घका अविचारका नियमलङ्घिनः स्नेहरहिता अतिद्वेषिणो
३२ निर्दयाश्च जाताः। ये जना एतादृशं कर्म्म कुर्व्वन्ति तएव मृतियोग्या
ईश्वरस्य विचारमीदृशं ज्ञात्वापि त एतादृशं कर्म्म स्वयं कुर्व्वन्ति
केवलमिति नहि किन्तु तादृशकर्म्मकारिषु लोकेष्वपि प्रीयन्ते।

---

२ द्वितीयोऽध्यायः।

१ पापेन सर्व्वेषां दण्डनीयत्वस्य कथनं ११ तत्र यिहूदिनाम् अन्यदेशिनाञ्च न विशेषः १७ दोषी सन् यश्चान्यं शिक्षयति तस्माच्च काचित् फलोत्पत्तिः २५ व्यवस्थाचरणं विना त्वक्छेदाच्च परित्राणञ्च।

१ हे परदूषक मनुष्य यः कोपि त्वं भवसि तवोत्तरदानाय पन्था नास्ति
यतो यस्मात् कर्म्मणः परं दोषिणं करोषि स्वयमपि तादृशस्य कर्म्मणः
२ करणाद् दोषी भवसि। किन्त्वेतादृशकर्म्मकारिणां प्रतिकूलं यं विचारम्
३ ईश्वरः करोति स यथार्थ इति वयं जानीमः। अतएव हे मानुष त्वं
यादृशं कर्म्म कुर्व्वतां दोषं कथयसि स्वयं यदि तादृशं कर्म्म करोषि तर्हि
४ त्वम् ईश्वरदण्डात् पलायितुं शक्ष्यसीति किं बुध्यसे? अपरं तव
मनसः परिवर्त्तनं कर्त्तुम् ईश्वरस्यानुग्रहो भवति तन्न बुद्ध्वा त्वं किं तस्या-
५ परिमितम् अनुग्रहं क्षमां चिरसहिष्णुत्वञ्च तुच्छीकरोषि? तथा कठोरात्
खेदरहिताद् अन्तः करणाद् ईश्वरस्य यथार्थविचाराज्ञायाः प्रकाशित-
६ त्वस्य क्रोधस्य च दिनं यावत् किं स्वार्थं कोपं सञ्चिनोषि? किन्तु स एकैक-
७ मनुजाय स्वस्वकर्म्मानुसारेण प्रतिफलं दास्यति ; वस्तुतस्तु ये जना धैर्य्यं
धृत्वा सत्कर्म्म कृत्वा महिमा सत्कारोऽमरत्वम् एतानि मृगयन्ते तेभ्योऽन-
८ न्तायु र्दास्यति। अपरं ये जनाः सत्यधर्म्मम् अगृहीत्वा विपरीतधर्म्मम्

टकन्ति तादृशान् विरोधिजनान् प्रति प्रथमतो यिहूदिनः प्रति
पश्चाद् अन्यदेशिनः प्रति, अर्थात् सर्व्वान् कुकर्म्मकारिणः प्राणिनः प्रति ९
कोपः क्रोधो दुःखं यातना च भविष्यन्ति; किन्तु यिहूदिन आरभ्य भिन्न- १०
देशिपर्य्यन्ता यावन्तः सत्कर्म्मकारिणो लोकाः सन्ति तान् प्रति महिमा
सत्कारः शान्तिश्च भविष्यन्ति।
ईश्वरस्य विचारे पक्षपातो नास्ति। यस्मिन् दिने मया प्रकाशितस्य ११
सुसंवादस्यानुसारेण ईश्वरो यीशुख्रीष्टेन मानुषाणाम् अन्तः करणानां १२
गूढाभिप्रायान् धृत्वा विचारयिष्यति तस्मिन् विचारदिने ये व्यवस्थाम्
अप्राप्य पापानि कृतानि व्यवस्थाया अप्राप्त्यनुरूपस्तेषां विनाशो भवि-
ष्यति; किन्तु ये व्यवस्थां प्राप्यापि पापान्यकुर्व्वन् व्यवस्थानुसारादेव तेषां १३
विचारो भविष्यति। व्यवस्थां श्रुत्वैव ईश्वरस्य समीपे निष्पापो भविष्यतीति १४
नहि किन्तु ये व्यवस्थानुरूपाणि कर्म्माणि कुर्व्वन्ति तएव पुण्यवत्त्वेन
गणिता भविष्यन्ति। यतो व्यवस्थाम् अप्राप्य भिन्नदेशीयलोका यदि १५
स्वभावतो व्यवस्थानुरूपान् आचारान् कुर्व्वन्ति तर्हि व्यवस्थाम् अप्राप्यापि
ते स्वेषां व्यवस्थास्वरूपाः स्वयमेव भवन्ति। तेषां मनसि साक्षिस्वरूपे १६
सति तेषां वितर्केषु च कदा तान् दोषिणः कदा वा निर्दोषान् कृतवत्सु
ते स्वान्तर्लिखितव्यवस्थायां स्वयमेव प्रमाणं ददति।
पश्य त्वं स्वयं यिहूदी विख्यातो व्यवस्थोपरि विश्वासं करोषि, ईश्वर- १७
मुद्दिश्य स्वं श्लाघसे, तथा तस्याभिमतं जानासि, सर्व्वासां कथानां सारं १८
विविंक्ते, अपरं व्यवस्थाशिक्षितो भूत्वा ऽन्धलोकानां मार्गदर्शयितारं १९
तिमिरस्थितलोकानां मध्ये दीप्तिस्वरूपम् अज्ञानलोकेभ्यो ज्ञानदातारं २०
बालकानां शिक्षयितारं ज्ञानस्य व्यवस्थायाश्च मूर्त्तिस्वरूपञ्च स्वं करोषि।
त्वं परान् शिक्षयसि किन्तु स्वयं स्वं किं न शिक्षयसि? वस्तुतश्चौर्य्य- २१
निषेधव्यवस्थां प्रचार्य्य त्वं किं स्वयमेव चोरयसे? तथा परान् प्रति पर- २२
दारगमनं निषिध्य स्वयं किं परदारान् गच्छसि? तथा त्वं स्वयं प्रतिमाद्वेषी
सन् स्वयं किं मन्दिरस्य द्रव्याणि हरसि? यस्त्वं व्यवस्थां श्लाघसे स त्वं २३

२४ किं व्यवस्थाम् अमान्यां कृत्वा ईश्वरस्यासम्मानं करोषि? शास्त्रे यथा लिखति
भिन्नदेशिनां समीपे युष्माकं दोषाद् ईश्वरस्य नाम्नो निन्दा भवति।
२५ यदि व्यवस्थां पालयसि तर्हि तव त्वक्छेदक्रिया सफला भवति; यदि
२६ व्यवस्थालङ्घनं करोषि तर्हि तव त्वक्छेदोऽत्वक्छेदो भविष्यति। यतो
व्यवस्थानुरूपकर्म्मकारी पुमान् अत्वक्छेदी सन्नपि स किं त्वक्छेदिनां मध्ये
२७ गणितो न भविष्यति? किन्तु त्वक्छेदव्यवस्थाया अधीनो भूत्वापि
व्यवस्थालङ्घनं कुर्व्वाणं त्वां स्वाभाविकात्वक्छेदिनो व्यवस्थापालका लोकाश्च
२८ किं न दूषयिष्यन्ति? तस्माद् यो बाह्ये यिहूदी स यिहूदी नहि तथा-
२९ ङ्गस्य यस्त्वक्छेदः स त्वक्छेदो नहि; किन्तु यो जन आन्तरिको यिहूदी
सएव यिहूदी अपरञ्च केवललिखितया व्यवस्थया न किन्तु मानसिको
यस्त्वक्छेदो यस्य च प्रशंसा मनुष्येभ्यो न भूत्वा ईश्वराद् भवति
सएव त्वक्छेदः।

---

३ तृतीयोऽध्यायः।

१ यिहूदिनां नानाधर्म्मानुष्ठानं ९ अन्येषामिव व्यवस्थालङ्घने कृते तेन न परित्राणं २१ एककृत्वो व्यवस्थालङ्घने कृते सति न त्राणं किन्तु केवलविश्वासात् त्राणञ्च।

१ अपरञ्च यिहूदिनि सति को लाभः? तथा त्वक्छेदाद् वा किं फलं?
२ सर्व्वथा बहूनि फलानि सन्ति, विशेषत ईश्वरस्य शास्त्रं तेभ्योऽदीयत।
३ कैश्चिद् अविश्वसने कृते तेषाम् अविश्वसनात् किम् ईश्वरस्य विश्वास्य-
४ ताया हानिरुत्पत्स्यते? केनापि प्रकारेण नहि यद्यपि सर्व्वे मनुष्या मिथ्या-
वादिनस्तथापि ईश्वरः सत्यवादी शास्त्रे यथा लिखितमास्ते

'अतस्त्वन्तु स्ववाक्येन निर्द्दोषोहि भविष्यसि।
विचारे चैव निष्पापो भविष्यसि न संशयः।'

५ अस्माकम् अन्यायेन यदीश्वरस्य न्यायः प्रकाशते तर्हि किं वदिष्यामः?
अहं मानुषाणां कथामिव कथां कथयामि, ईश्वरः समुचितं दण्डं दत्त्वा
६ किम् अन्यायी भविष्यति? इत्थं न भवतु तथासतीश्वरः कथं जगतो
७ विचारयिता भविष्यति? मम मिथ्यावाक्यवदनेन यदीश्वरस्य सत्यत्वं तस्य

महिमानम् अतीवाबर्द्धयत् तर्हि कस्मादहं विचारेऽपराधित्वेन गणितो
भवामि। आगच्छ मङ्गलार्थम् पापं करवाम, त्वं वरम् एतां कथां ८
कुतो न कथयसि? किन्तु ये वदन्ति ते नितान्तं दण्डस्य पात्राणि भवन्ति;
तथाप्यस्माकं ग्लानिं कृत्वा कियन्तो लोका वदन्ति वयमपि कथामेतां
प्रचारयामः।

अन्यलोकेभ्यो वयं किं श्रेष्ठाः? कदाचन नहि यतो यिहूदिनो ऽन्य- ९
देशिनश्च सर्व्वएव पापस्यायत्ता इत्यस्य प्रमाणं वयं पूर्व्वम् अददाम।
लिपि र्यथास्ते

१० ——————— 'नैकोपि धार्म्मिको जनः।

११ एवं ज्ञानीश्वरज्ञानी मानवः कोपि नास्ति हि।

१२ विमार्गगामिनः सर्व्वे सर्व्वे दुष्कर्म्मकारिणः।

एको जनोपि नो तेषां साधुकर्म्म करोति च।

१३ तथा तेषान्तु वै कण्ठा अनावृतश्मशानवत्।

स्तुतिवादं प्रकुर्व्वन्ति जिह्वाभिस्ते तु केवलं।

तेषामोष्ठस्य निम्नेतु विषं तिष्ठति सर्प्पवत्।

१४ मुखं तेषां हि शापेन कपटेन च पूर्य्यते।

१५ रक्तपाताय तेषां तु पदानि क्षिप्रगानि च।

१६ पथि तेषां मनुष्याणां नाशः क्लेशश्च केवलः।

१७ ते जना नहि जानन्ति पन्थानं सुखदायिनं।

१८ परमेशाद् भयं यत्तत् तच्चक्षुषोरगोचरं।'

व्यवस्थायां यद्यल्लिखति तद् व्यवस्थाधीनान् लोकान् उद्दिश्य लिख- १९
तीति वयं जानीमः। ततो मनुष्यमात्रो निरुत्तरः सन् ईश्वरस्य साक्षाद्
अपराधी भवति। अतएव व्यवस्थापालनेन कश्चिदपि प्राणीश्वरस्य २०
साक्षात् पुण्यवत्त्वेन गणितो भवितुं न शक्ष्यति यतो व्यवस्थया पाप-
ज्ञानमात्रं जायते।

२१ किन्तु व्यवस्थायाः कर्म्म भिन्नम् ईश्वरेण देयन्तु यत् पुण्यं तद् व्यवस्थाया
२२ भविष्यद्वादिगणस्य च वचनै र्निश्चितं सत् इदानीं प्रकाशते, अर्थाद् यीशुख्रीष्टे
विश्वासकरणाद् ईश्वरेण दत्तं तत् पुण्यं सकलेषु प्रकाशितं सत् सर्व्वान्
२३ विश्वासिनः प्रति वर्त्तते। तेषां कोपि प्रभेदो नास्ति यतः सर्व्वएव पापं कृत्वा
२४ ईश्वरस्य प्रशंसाया भाजनानि न भवन्ति। त ईश्वरस्यानुग्रहाद् ख्रीष्टेन मूल्यं
२५ विना परित्राणं प्राप्य पुण्यवत्त्वेन गणिता भवन्ति। यस्माद् ईश्वरो यीशौ
विश्वासकारिणं पुण्यवत्त्वेन गणितं कृत्वा यथा न्यायकारी ज्ञातो भवति
२६ तदर्थं ख्रीष्टस्य रक्ते विश्वसनाद् ईश्वरस्य सहिष्णुत्वेन पुराकृतपापानां मार्जन-
करणात् स्वन्याय्यतां प्रकाशयितुं वर्त्तमानपापानां मार्ज्जनेन स्वन्याय्यतां
२७ प्रकाशयितुञ्च तं बलिस्वरूपं निरूपितवान्। तर्हि कुत्रात्मश्लाघा? सा
दूरे तिष्ठति; कया व्यवस्थया? किं क्रियारूपव्यवस्थया? इत्थं नहि
२८ किन्तु तत् केवलविश्वासरूपया व्यवस्थयैव भवति। अतएव व्यवस्थानुरूपां
क्रियां विना केवलेन विश्वासेन लोकः पुण्यवत्त्वेन गणितो भवितुं शक्नो-
२९ तीत्यस्य राद्धान्तं दर्शयामः। स किं केवलयिहूदिनाम् ईश्वरो भिन्न-
३० देशिनाम् ईश्वरो न भवति? भिन्नदेशिनामपि भवति; यस्माद् एक
ईश्वरो विश्वासात् त्वक्छेदिनम् विश्वासेनात्वक्छेदिनञ्च पुण्यवत्त्वेन गणयति।
३१ तर्हि विश्वासेन वयं किं व्यवस्थां लुम्पाम? इत्थं न भवतु वयं व्यवस्थां
संस्थापयामः।

---

४ चतुर्थोध्यायः।

१ विश्वासाद् इब्राहीमः पुण्यवत्त्वं ९ तस्येब्राहीमः पुण्यं त्वक्छेदाच्च किन्तु विश्वासात् प्राप्तं १८ तत् पुण्यं विश्वासेनास्माभिः प्राप्तम्।

१ अस्माकं पूर्व्वपुरुष इब्राहीम् कायिकक्रियया यद् यत् प्राप्तवान् तस्मिन्
२ किं वदिष्यामः? स यदि निजया क्रियया पुण्यवत्त्वेन गणितोऽभविष्यत्
तर्हि तस्यात्मश्लाघां कर्त्तुं पन्थाभविष्यत्, इति सत्यं किन्त्वीश्वरस्य समीपे
३ नहि। शास्त्रे किं लिखति? इब्राहीम् ईश्वरे विश्वसनात् स विश्वास-
४ स्तस्मै पुण्यार्थं गणितो बभूव। कर्म्मकारिणो यद् वेतनं तद् अनु-

ग्रहस्य फलं नहि किन्तु तेनोपार्जितं मन्तव्यम्। किन्तु यः पापिनं पुण्य- ५
वन्तं गणयति तस्मिन् विश्वासिनः कर्म्महीनस्य जनस्य यो विश्वासः स
पुण्यार्थं गणितो भवति। अपरं यं क्रियाहीनम् ईश्वरः पुण्यवत्त्वेन गणित- ६
वान् तेन प्राप्ता आशिषो दायूद् वर्णयामास यथा।

७ 'स धन्योऽघानि मृष्टानि यस्यागांस्यावृतानि च।

८ स च धन्यः परेशेन पापं यस्य न गण्यते।'

त्वक्छेदिनम् अत्वक्छेदिनं वा कं प्रति स आशीर्व्वादो भवति? ९
इब्राहीमो विश्वासः पुण्यार्थं गणित इति वयं वदामः। स विश्वासस्तस्य १०
त्वक्छेदित्वावस्थायां किम् अत्वक्छेदित्वावस्थायां कस्मिन् समये एता-
दृशो गणितः? त्वक्छेदित्वावस्थायां नहि किन्त्वत्वक्छेदित्वावस्थायां।
अपरञ्च स यथा सर्व्वेषाम् अत्वक्छेदिनां विश्वासकारिणाम् आदि- ११
पुरुषो भवति, तेपि यथा पुण्यवत्त्वेन गणिता भवन्ति; अपरम् अस्माकं
पूर्व्वपुरुषस्येब्राहीमोऽत्वक्छेदित्वावस्थायां यादृशो विश्वास आसीत् तादृशं
विश्वासं कृत्वा ये जना न केवलं त्वक्छेदिनः सन्ति किन्तु तस्य पादचिह्नेन
गमनं कुर्व्वन्ति, एतादृशानामपि त्वक्छेदादिपुरुषो भवति, तदर्थं त्वक्- १२
छेदित्वात् पूर्व्वं तस्य विश्वासात् यत् पुण्यम् उत्पन्नं तदीयम् एकं
प्रमाणस्वरूपं तस्य त्वक्छेदस्य चिह्नं प्राप्नोत्। इब्राहीम् जगतोऽधि- १३
कारी भविष्यति यैषा प्रतिज्ञा तं तस्य वंशञ्च प्रति पूर्व्वम् अक्रियत
सा व्यवस्थया नहि किन्तु विश्वासनिमित्तकं यत् पुण्यं तद्द्वारा।
यतो व्यवस्थावलम्बिनो यद्यधिकारिणो भवन्ति तर्हि विश्वासो विफलो १४
जायते तथा सा प्रतिज्ञापि निष्फला जायते। अधिकन्तु व्यवस्था १५
कोपस्य जनिका भवति यतो यत्र व्यवस्था न विद्यते तत्राज्ञाया
लङ्घनमपि न विद्यते। अतएव केवलव्यवस्थावलम्बिनो लोकान् प्रतीत्नि १६
नहि किन्त्वस्माकं पूर्व्वपुरुषस्येब्राहीमः सदृशान् विश्वासकारिणः सर्व्वान्
लोकान् प्रति सा प्रतिज्ञा, यो निर्जीवान् सजीवान् अविद्यमानान् विद्य-
मानांश्च करोति तादृश इब्राहीमो विश्वासस्याश्रयो य ईश्वरः, तस्य साक्षाद् १७

यथा स्थास्नु भवति तदर्थम् अनुग्रहाद् विश्वासेनैवाधिकारो भवति यथा
लिखितं विद्यते, 'अहं त्वां बहुजातीनाम् आदिपुरुषं कृत्वा नियुक्तवान्।'
१८ त्वदीय एतादृशो वंशो जनिष्यते यदिदं प्रतिश्रुतं वाक्यम् उक्तमासीत् तद-
नुसारेण इब्राहीम् बहुदेशीयलोकानाम् आदिपुरुषो यथा भवति तस्मात्
१९ प्रत्याशासम्भवे न सत्यपि प्रत्याशया विश्वासं कृतवान्। अपरञ्च स विश्वासे
बलवान् भूत्वा शतवत्सरवयस्कत्वात् स्वशरीरस्य जरां साराया नामः स्वभा-
२० र्य्याया रजोनिवृत्तिञ्च न मेने। अपरं विश्वासं कुर्व्वन् ईश्वरस्य प्रतिज्ञा-
२१ वचने कमपि संशयं न चकार; किन्त्वीश्वरो यां प्रतिज्ञाम् अकरोत् तां
सफलां कर्त्तुं शक्नोतीति निश्चितं विज्ञाय दृढविश्वासः सन् ईश्वरस्य
२२ महिमानं प्रकाशयाञ्चकार। इति हेतोस्तस्य स विश्वासस्तदीयपुण्याय
२३ गणितो बभूव। तदर्थं गणितो बभूव, एतत् केवलस्य तस्य निमित्तं
२४ लिखितं नहि, अस्माकं निमित्तञ्च यतो योऽस्माकं पापमोचनकारणात्
समर्पितोऽभवत् तथाऽस्माकं पुण्यनिमित्तम् उत्थितोऽभवत् तादृशो
२५ योऽस्माकं प्रभु र्यीशुस्तम् उत्थापितवान् य ईश्वरस्तस्मिन् ईश्वरे
यदि वयं विश्वासं कुर्म्मस्तर्ह्यस्माकमपि स एव विश्वासः पुण्याय गणितो
भविष्यति।

---

५ पञ्चमोऽध्यायः।

१ विश्वासेन पुण्ये सति बहुलाभः   १२ आदमा यथा पापं मृतिश्च तथा ख्रीष्टेन पुण्यं परमायुश्च।

१ विश्वासेन पुण्यवत्त्वेन गणितत्वाद् ईश्वरेण सार्द्धम् अस्माकं प्रभुना
२ यीशुख्रीष्टेनास्माकं मेलनं भवति। अपरं विश्वासेन तदीयेनानेनानुग्रहेण
समाश्रयं प्राप्य येन वयं स्थिरा आस्महे, ईश्वरीयविभवप्राप्तेः प्रत्याशया च
३ समानन्दामः। तत् केवलं नहि किन्तु क्लेशभोगेऽप्यानन्दामो यतः क्लेशाद्
४ धैर्य्यं जायते, धैर्य्याद् अनुभवो जायते, अनुभवात् प्रत्याशा जायते, प्रत्या-
५ शातो व्रीडितत्वं न जायते यस्माद् अस्मभ्यं दत्तेन पवित्रेणात्मनास्माकम् अन्तः-
६ करणेषु विस्तारितम् ईश्वरस्य प्रेम। अस्मासु निरुपायेषु सत्सु ख्रीष्ट उपयुक्ते

समये पापिनां निमित्तं स्वीयान् प्राणान् अददात्। यद्यपि बहुप्रदस्य ७
जनस्य निमित्तं कोपि प्राणान् दातुं साहसं कर्त्तुं शक्नोति, तथापि धार्म्मि-
कस्य निमित्तं प्रायेण कोपि प्राणान् न ददाति। किन्त्वस्मासु पापिषु सत्स्वपि ८
निमित्तमस्माकं ख्रीष्टः स्वप्राणान् दत्तवान्, तस्माद् ईश्वरोस्मान् प्रति निजं
प्रेमाणं प्रकाशितवान्। अतएव तस्य रक्तपातेन पुण्यवत्त्वेन गणिता भूत्वा वयं ९
नितान्तं तेन दण्डाद् रक्षिता भविष्यामः। फलतोऽस्मासु रिपुषु सत्स्वपि १०
ईश्वरस्य पुत्रस्य मरणेन तेन सार्द्धं यद्यस्माकं मेलनं भवति तर्हि मेलनं
प्राप्य तस्य जीवनेनावश्यं रक्षां लप्स्यामहे। तत् केवलं नहि किन्तु येन ११
मेलनम् अलभामहि तेनास्माकं प्रभुना यीशुख्रीष्टेन साम्प्रतम् ईश्वरे
समानन्दामश्च।

तथा सति, एकेन मानुषेण पापं पापेन मरणं जगतीम् आगच्छद् अपरं १२
सर्व्वेषां पापकरणात् सर्व्वे मानुषा मृतेर्निघ्ना अभवन्। यतो व्यवस्था- १३
दानसमयं यावत् जगति पापम् आसीत् किन्तु यत्र व्यवस्था नास्ति
तत्र पापस्यापि गणना न क्रियते। तथापि भाविनो जनस्य स्वरूपो य १४
आदम् तेन कृतेन पापेन सदृशं पापं ये नाकुर्व्वन् आदमम् आरभ्य मुसां
यावत् तेषामुपरि मृत्यू राजत्वं करोति। किन्त्वपराधस्य यादृशो भाव- १५
स्तादृग् अनुग्रहदानस्य भावो न भवति यत एकस्य जनस्यापराधेन यदि
बहूनां मरणम् अघटत तथापीश्वरानुग्रहो ऽनुग्रहजनितं दानञ्चैत्र
एकेन जनेन, अर्थाद् यीशुना ख्रीष्टेन, तस्मादपि बहुभ्यो बाहुल्येना-
दीयत। अपरम् एकस्य जनस्य पापकरणाद् यथा भवत्यनुग्रहदानं तादृक् १६
न भवति यत एकस्य जनस्य पापकरणाद् दण्डाज्ञा बभूव किन्तु बहु-
पापमोचनाय पुण्यप्राप्तये चानुग्रहदानं बभूव। यत एकस्य जनस्य पाप १७
करणाद् एकस्य दोषाद् यदि मरणस्य राजत्वं जातं तर्हि ये जना
अनुग्रहस्य बाहुल्यं पुण्यरूपदानञ्च प्राप्नुवन्ति त एकेन जनेन, अर्थात्
यीशुख्रीष्टेन, परमायुषि राजत्वम् अवश्यं करिष्यन्ति। एकस्य जनस्यापरा- १८
धेन यथा सर्व्वे दण्डभोगस्य भाजनानि जातानि तद्वद् एकस्य जनस्य

१९ पुण्येन परमायुः प्राप्तिनिमित्तं बहूनां पुण्यवत्त्वं जायते। अपरम् एकस्य
जनस्याज्ञालङ्घनाद् यथा बहवो ऽपराधिनो जातास्तद्वद् एकस्याज्ञा-
२० पालनाद् बहवः पुण्यवत्त्वेन गणिता भवन्ति। अधिकन्तु व्यवस्थास्थाप-
नाद् अपराधस्य बाहुल्यं जातं किन्तु यत्र पापस्य बाहुल्यं तत्रैव
२१ तस्माद् अनुग्रहस्य बाहुल्यम् अभवत्। तेन मृत्युभोगं कारयितुं यद्वत्
पापस्य राजत्वम् अभवत् तद्वद् अस्माकं प्रभो यीशुख्रीष्टस्य पुण्येनानन्त-
परमायु र्दातुम् अनुग्रहस्य राजत्वं भवति।

---

## ६ षष्ठोऽध्यायः।

१ ख्रीष्टात् पुण्ये प्राप्ते पापकरणम् अनुचितं १२ तेन पुण्यवति सति पापस्य दमनं धर्म्मपालनम् उचितं तेनानन्तायुः प्राप्तव्यं।

१ प्रभूतरूपेण यथानुग्रहः प्रकाशते तदर्थं पापे तिष्ठाम इति वाक्यं किं
२ वयं वदिष्यामः? इत्थं न भवतु। पापसम्बन्धेन मृता वयं पुनस्तस्मिन्
३ कथम् आयुःक्षेपं करिष्यामः? वयं यावन्तो लोका यीशुख्रीष्टे मज्जिता
अभवाम तावन्तएव तस्य मरणे मज्जिता अभवाम, इति किं यूयं न जानीथ?
४ ततो यथा पितुः पराक्रमेण श्मशानात् ख्रीष्टस्योत्थानम् अभवत् तथा मज्ज-
नेन तेन सार्द्धं श्मशानशायित्वेन वयमपि तादृशं नूतनम् आचरणं गन्तुम्
५ उत्थिता भवामः। अपरं वयं यदि सद्व मरणभागिनो भवामस्तर्ह्यु-
६ त्थानभागिनोऽपि भविष्यामः। पापस्य सेवनं यथा पुन र्न कुर्म्मस्तदर्थम्
अस्माकं पापरूपशरीरस्य विनाशार्थम् अस्माकं पुरातनस्वभावस्तेन साकं
७ क्रुशे विद्धो भवति, एतद् वयं जानीमः। कोऽपि मृतः सन् पापान् मुक्तो भवति।
८ अतएव यदि वयं ख्रीष्टेन सार्द्धं मृता भवामस्तर्हि पुनरपि तेन सहिताः
९ सजीवाः सन्त उत्थास्याम इत्यत्रास्माकं विश्वासो विद्यते। यतः ख्रीष्टेन
श्मशानाद् उत्थाने कृते सति मृत्योराधिपत्यं तदुपरि पुन र्न स्थित्या स
१० पुनः कदापि न मरिष्यति, एतद् वयं जानीमः। अपरञ्च स यदा प्राणान्
परित्यज्य एकदैव पापान् मुक्तोऽभवत् तथा जीवनं लब्ध्वा ईश्वरस्य समीपे

सजीवो भवति; तद्वत् यूयमपि पापान् मुक्ताः सन्तोऽस्माकं प्रभुना यीशु- ११
ख्रीष्टेन स्वान् ईश्वरस्य समीपे सजीवान् जानीत।

अपरञ्च कुत्सिताभिलाषं पूरयितुं मर्त्यदेहेऽस्मिन् अधिपतित्वं कर्त्तुं १२
पापाय मा दात। अपरं स्वं स्वम् अङ्गम् अधर्म्मरूपम् अस्त्रं कृत्वा पाप- १३
सेवायां न समर्पयत किन्तु श्मशानाद् उत्थितान् स्वान् ईश्वरस्य धर्म्मास्त्र-
स्वरूपं स्वं स्वम् अङ्गञ्च ईश्वरे समर्पयत। तेनै युष्माकम् उपरि पापस्याधि- १४
पतित्वं पुन र्न भविष्यति यस्माद् यूयं व्यवस्थाया आयत्ता न भूत्वानुग्रहस्य
निघ्ना अभवत। किन्तु व्यवस्थाया अधीना न भूत्वा वयम् अनुग्रहस्य १५
निघ्ना अभवाम, इति चिन्तयित्वा किं पापं करिष्यामः? इत्थं मा भूयात्।
यतो मृतिफलनिमित्तं पापं यद्वा पुण्यफलनिमित्तं निदेशपालनम् एत- १६
योरुभयो र्मध्ये यस्याज्ञापालने स्वान् समर्प्य निदेशग्राहिणो भवथ तस्यैव
दासा भवथ, एतत् किं यूयं न जानीथ? अपरञ्च पूर्व्वं यूयं पापस्य किङ्करा १७
आसत, इति सत्यं किन्तु यस्यां शिक्षारूपायां मूषायां निक्षिप्ता अभवत
तस्या आकृतिं मनःसु धृतवन्त इति कारणाद् ईश्वरस्य धन्यवादो भवतु।
इत्थं यूयं पापान् मुक्ताः सन्तो धर्म्मस्य किङ्करा भवथ। युष्माकं शारी- १८
रिक्या दुर्ब्बलताया हेतो र्मानववद् अहम् एतद् ब्रवीमि; पूर्व्वम् उत्तरो- १९
त्तरम् अधर्म्मकरणार्थं यद्वत् पापामेध्ययोः किङ्करत्वे निजाङ्गानि समार्प-
यत तद्वत् साधुकर्म्मकरणार्थम् इदानीं धर्म्मस्य भृत्यत्वे निजाङ्गानि सम-
र्पयत। यदा यूयं पापस्य किङ्करा आसत तदा धर्म्मच्युता आसत। तर्हि २०
यानि कर्म्माणि यूयम् इदानीं लज्जास्पदानि बुध्यध्वे पूर्व्वं तै र्युष्माकं को २१
लाभ आसीत्? यतस्तेषां कर्म्मणां फलं मरणं। किन्तु साम्प्रतं यूयं पापान् २२
मुक्ताः सन्त ईश्वरस्य किङ्करा भवथ तस्माद् युष्माकं पवित्रत्वरूपं फलम्
अनन्तायुः स्वरूपं पारितोषिकम् आस्ते। यतः पापस्य वेतनं मरणं किन्त्व- २३
स्माकं प्रभुना यीशुख्रीष्टेन ईश्वरस्यानुग्रहदानम् अनन्तायुः।

७ सप्तमोऽध्यायः।

१ विश्वासिलोकानां व्यवस्थातो मुक्तिः ख्रीष्टेन सहोढत्वं ७ व्यवस्थाया अभद्रत्वं किन्तु पवित्रत्वं न्याय्यत्वं हितदायकत्वं १३ व्यवस्थालङ्घनेन पापे जाते सति कोपि यदि तत् पापम् प्रतीयते तर्हि व्यवस्थाया उत्तमत्वस्वीकरणकथनञ्च।

१ हे भ्रातृगण व्यवस्थाविदः प्रति ममेदं निवेदनं व्यवस्था केवलमानवो-
२ परि यावज्जीवम् अधिपतित्वं करोतीति यूयं किं न जानीथ? यावत्कालं
पति र्विद्यमानस्तावत्कालम् ऊढा भार्य्या तस्मिन् बद्धा तिष्ठति किन्तु यदि
३ पति र्म्रियते तर्हि सा नारी पत्यु र्व्यवस्थातो मुक्ता भवति। एतत्कार-
णात् पत्यौ सजीवे सति नारी यद्यन्यं पुरुषं विवहति तर्हि सा
व्यभिचारिणी भवति किन्तु यदि स पति र्म्रियते तर्हि सा तस्या व्यव-
४ स्थाया मुक्ता सती भिन्नपुरुषेण व्यूढापि व्यभिचारिणी न भवति। हे मम
भ्रातृगण यः श्मशानाद् उदतिष्ठत् तेन सह युष्माकं विवाहस्य जातत्वाद्
ईश्वरनिमित्तं यथास्माकं फलं जायते तदर्थं ख्रीष्टस्य शरीरेण यूयं
५ व्यवस्थासम्बन्धेन मृतवन्तः। यतोऽस्माकं शारीरिकाचाराचरणसमये
मरणरूपं फलम् उत्पादयितुं व्यवस्थादूषितः पापाभिलाषोऽस्माकम् अङ्गेषु
६ सजीवो भूत्वा स्थितवान्; किन्तु यस्या व्यवस्थाया वशे आस्महि तां प्रति
मृतत्वाद् वयं यथा पूर्व्वकालीनाया व्यवस्थाया अनुसारेण पुन र्नाचरित्वा
नवीनस्वभावेनेश्वरं सेवामहे तदर्थं व्यवस्थाया अधीनत्वान् मुक्ता भवामः।
७ तर्हि वयं किं ब्रूमः? व्यवस्था किं पापजनिका भवति? नेत्थं न भवतु।
८ व्यवस्थायां न स्थितायां पापं किम् इति नाविदं; किन्तु व्यवस्थया पापम्
अवकाशं प्राप्यास्माकम् अन्तः सर्व्वया कुत्सिताभिलाषम् अजनयत्; यतो
९ व्यवस्थाया अनुपस्थितत्वात् पापम् अम्रियत। अपरं पूर्व्वं व्यवस्थाया अनु-
पस्थितत्वाद् अहं सजीव आसं किन्तु ततः परम् आज्ञाया उपस्थितत्वात्
१० पापं सजीवम् अभवत् तदाहम् अम्रिये। इत्थं सति जीवननिमित्ता
११ याज्ञा सा मृत्युजनिकाऽभवत्। यतः पापम् अवकाशं प्राप्य व्यवस्थाया
१२ आज्ञया मम भ्रमं जनयित्वा तेन माम् अहत्। अतएव व्यवस्था पवित्रा,
आदेशश्च पवित्रो न्याय्यो हितकारी च भवति।

तर्हि यत् स्वयं हितकृत् तत् किं मम मृत्युजनकम् अभवत्? इत्थं १३
न भवतु ; किन्तु पापं यथा पापमिव दृश्यते तथा निदेशेन पापं यथातीव
पापमिव दृश्यते तदर्थं हितकारिणादेशेन तन् मम मरणम् अजनयत्।
व्यवस्था पारमार्थिकीति वयं जानीमः किन्त्वहं सांसारिकः पापस्य क्रीत- १४
किङ्करो विद्ये। यतो यत् कर्म्म करोमि तदेव मम मनोभिमतं न भवति ; १५
अपरं यन् मम मनोभिमतं तन् न करोमि किन्तु यद् ऋतीये तत्
करोमि। तथात्वे यन् ममानभिमतं तद् यदि करोमि तर्हि व्यवस्था १६
उत्तमेति स्वीकरोमि। अतएव सम्प्रति तत् कर्म्माहं स्वयं करो- १७
मीति नहि किन्तु मम शरीरस्थं यन् पापं तदेव करोति। यतो मयि, १८
अर्थात् मम शरीरे, किमप्युत्तमं न वसति,एतद् अहं जानामि;ममे-
च्छायां तिष्ठन्त्यामपि किमप्युत्तमं कर्म्म कर्त्तुं समर्थो न भवामि। यतो यामु- १९
त्तमां क्रियां कर्त्तुमहं वाञ्छामि तां न करोमि किन्तु यत् कुत्सितं कर्म्म
कर्त्तुं मम वाञ्छा नास्ति तदेव करोमि। अतएव यद्यत् कर्म्म कर्त्तुं मम २०
मति र्न भवति तद् यदि करोमि तर्हि स स्वयं नाहं ममान्त र्वत् पापं
वर्त्तते तदेव करोति। भद्रं कर्त्तुं मदीयेच्छाकाले ऽभद्रं कर्त्तुम् उप- २१
स्थितं स्वभावमेकं मयि पश्यामि। अहं नवीनस्वभावेनेश्वरव्यवस्थायां २२
सन्तुष्ट आसे ; किन्त्वङ्गस्थितस्य पापस्य व्यवस्थाया आयत्तं मां कर्त्तुं २३
चेष्टमानं मदीयाङ्गे तद्विपरीतं युद्धं कुर्व्वन्तं तदन्यमेकं स्वभावं प्रप-
श्यामि। हाहा योऽहं दुर्भाग्यो मनुजस्तं माम् एतस्मान् मृताच्छरी- २४
रात् को निस्तारयिष्यति? अस्माकं प्रभुना यीशुख्रीष्टेन निस्तारयितुरी- २५
श्वरस्य धन्यवादं करोमि। अतएव शरीरेण पापव्यवस्थाया मनसातु
ईश्वरव्यवस्थायाः सेवनं करोमि।

---

८ अष्टमोऽध्यायः।

१ ख्रीष्टे विश्वासिनां व्यवस्थादण्डान्मुक्ति र्धर्म्माचरणञ्च १२ ईश्वरस्य पुत्रत्वं विभवा-
पेक्षणं तच्च नियुक्तत्वञ्च ३१ ख्रीष्टेन तेषां लाभो जयश्च।

ये जना ख्रीष्टं यीशुम् आश्रित्य सांसारिकाचारानुसारेण नाच- १

रित्वा पारमार्थिकम् आचारम् आचरन्ति तेऽधुना दण्डार्हा न भवन्ति।
२ जीवनदायिका पारमार्थिकी च या ख्रीष्टयोशौ व्यवस्था सा पापान्
३ मरणजनिकाया व्यवस्थायाश्च माम् अमोचयत्। यस्माच्छरीरस्य दुर्ब्ब-
लत्वाद् व्यवस्थया यत् कर्म्म साधयितुमशक्यं ईश्वरः पापस्य बलिं दातुं
निजपुत्रं पापिलोकानां सादृश्येन प्रेष्य तस्य शरीरे पापस्य दण्डं कृत्वा तत्
४ कर्म्म साधितवान्। ततः सांसारिकाचारानुसारेण नाचरित्वा पारमार्थि-
कम् आचारं कुर्व्वद्भिरस्माभि र्व्यवस्थाग्रन्थे लिखितानि यानि धर्म्मकर्म्माणि
५ तानि सर्व्वाणि साध्यन्ते। ये सांसारिकास्ते सांसारिके कर्म्मणि समासक्ता
भवन्ति किन्तु ये पारमार्थिकास्ते पारमार्थिके कर्म्मण्यासक्ता भवन्ति
६ तथा शारीरिके कर्म्मणि योऽनुरागः सोऽनुरागो मरणजनकः किन्तु
७ पारमार्थिके कर्म्मणि योऽनुरागः स परमायुः शान्तिश्च जनयति। शारी-
रिके कर्म्मणि योऽनुरागः स ईश्वरस्य विरुद्धं शत्रु र्भवति तस्माद् ईश्वरस्य
८ व्यवस्थाया अधीनो न भवति भवितुञ्च न शक्नोति। एतस्मात् सांसारिकः
९ सन् कोपीश्वरं तोषयितुं न शक्नोति। ईश्वरस्यात्मा यदि युष्मासु
वसति तर्हि यूयं सांसारिका न भवथ किन्तु पारमार्थिका लोका भवथः
१० तथा यः कश्चित् ख्रीष्टस्यात्मानं न प्राप्नोति स ख्रीष्टस्य न भवति। यदि
ख्रीष्टो युष्मासु तिष्ठति तर्हि पापेन शरीरे मरणस्याधीने सत्यपि पुण्ये-
११ नात्मा सजीवो भवति। यीशुम् उत्थापयिता य ईश्वरस्तस्यात्मा यदि
युष्मासु वसति तर्हि यः श्मशानात् ख्रीष्टम् उत्थापितवान् स युष्माकं मध्ये
वासिना निजात्मना युष्माकमपि मर्त्त्यदेहान् पुनः सजीवान् करिष्यति।
१२ हे भ्रातृगण वयं शारीरिकं सुखाभिलाषं परिपूरयितुं शरीरस्य
१३ निघ्ना अभवाम, इत्थं नहि; यतः शारीरिकसुखाभिलाषानुसारेण
आचारं कृत्वा यूयं मरिष्यथ किन्त्वात्मना यदि शारीरिकं कर्म्म विना-
१४ शयथ तर्हि जीविष्यथ। यतो यावन्तो लोका ईश्वरस्यात्मना आकृष्टा
१५ भवन्ति ते सर्व्व एव ईश्वरस्य सन्ताना भवन्ति। यूयं पुनरपि भयजनकं
दास्यरूपं स्वभावं न प्राप्ताः किन्तु येन स्वभावेनेश्वरं पितः पितरिति प्रोच्य

सम्बोधयथ तादृशं दत्तकपुत्रत्वरूपं स्वभावं प्राप्नुत। अपरञ्च वयम् ईश्वरस्य १६
सन्ताना एतस्मिन् पवित्र आत्मा अस्माकं आत्मभिः सार्द्धं प्रमाणं दत्तवान्।
अतएव वयं यदि सन्तानास्तर्ह्यधिकारिणः, अर्थाद् ईश्वरस्य स्वत्वाधिका- १७
रिणः ख्रीष्टेन सहाधिकारिणश्च भवामः; अपरं तेन सार्द्धं यदि दुःखभागिनो
भवामस्तर्हि तस्य विभवस्यापि भागिनो भविष्यामः। किन्त्वस्मासु प्रका- १८
शिष्यते यो भावी विभवस्तस्य समीपे वर्त्तमानकालस्येदं दुःखमहं तृणमिव
जानामि। यत ईश्वरस्य सन्तानानां मध्ये विभव उदेष्यति, एतां प्रत्याशां १९
कृत्वा प्राणिगणो नितान्तम् अपेक्षते। अपरञ्च प्राणिगणः स्वैरम् अली- २०
कताया वशीभूतो नाभवत् किन्तु मरणाधीनत्वाद् ईश्वरस्य सन्ता-
नानां परममुक्त्या मुक्तो भविष्यन्तीत्यभिप्रायेण यस्तान् वशीभूतान् २१
अकरोत् तेन वशीभूता अभवत्। अपरञ्च प्रसववेदनायाः सदृश्या वेदनया २२
व्यथितः सन् इदानीं यावत् प्राणिमात्र आर्त्तस्वरं करोतीति वयं जानीमः।
केवलास्त इति न किन्तु प्रथमजातं फलस्वरूपं आत्मानं प्राप्ता वय- २३
मपि दत्तकपुत्रत्वपदम् अर्थात् श्मशानाच्छरीरोत्थानम् अपेक्ष्य तद्वद्
अन्तरार्त्तरावं कुर्म्मः। वयं प्रत्याशया त्राणं लभामहे किन्तु प्रत्यक्ष- २४
वस्तुनो या प्रत्याशा सा प्रत्याशा नहि यतो मनुष्यो यद् भुङ्क्ते तस्य २५
प्रत्याशां कुतः करिष्यति? यन्न भुञ्जमहे तादृशस्य वस्तुनः प्रत्याशां यदि
कुर्व्वस्तर्हि धैर्य्यम् अवलम्ब्य तत्प्राप्तिम् अपेक्ष्य तिष्ठामः। तत आत्मापि २६
अस्माकं दुर्ब्बलतायाः सहायत्वं करोति; अपरं किन्निमित्तं प्रार्थनं कर्त्तव्यं
तद् बोद्धुम् अशक्नुम, अस्पष्टैनार्त्तरावैणात्मा स्वयम् अस्मन्निमित्तं निवेदनं
करोति। अपरम् ईश्वराभिमतानुसारेण पवित्राणां लोकानां निमित्तं २७
निवेदनं करोति य आत्मा तस्याभिप्रायम् अन्तर्य्यामी जानाति। अपरम् २८
ईश्वरनिरूपितानुसारेणाहूताः सन्तो ये तस्मिन् प्रेमाणं कुर्व्वन्ति सर्व्वा
घटना मिलित्वा तेषां मङ्गलं जनयन्ति, एतद् वयं जानीमः। यत ईश्वरो २९
यान् पूर्व्वं लक्ष्यीकृतवान् भ्रातृगणस्य मध्ये ख्रीष्टं ज्येष्ठभ्रातरं कृत्वा तस्य
प्रतिमूर्त्याः सादृश्यं प्राप्तुं तान् न्ययुंक्त। अपरञ्च यान् नियुक्तवान् तान् ३०

आहूतवान् यान् आहूतवान् तान् पुण्यवत्त्वेन गणितवान् यान् पुण्यवत्त्वेन
गणितवान् तान् विभवाधिकारिणोऽपि कृतवान्।
३१ इत्यत्र वयं किं ब्रूमः? ईश्वरो यद्यस्माकं सपक्षो भवति तर्हि को वि-
३२ पक्षोऽस्माकं भवितुं शक्नोति? स्वयं पुत्रं न रक्षित्वा योऽस्माकं सर्व्वेषां
३३ निमित्तं तं प्रदत्तवान् स किम् अनुग्रहणाऽस्मभ्यम् अन्यानि सर्व्वाणि न
दास्यति? ईश्वरस्य मनोनीतेषु को दोषारोपं करिष्यति? किं यस्तान्
३४ पुण्यवत्त्वेन गणयति स एव? अपरं तेभ्यो दण्डदानाज्ञां को वा करिष्यति?
योऽस्मन्निमित्तं प्राणान् त्यक्तवान् केवलं तन्न किन्तु श्मशानाद् उत्थाय
ईश्वरस्य दक्षिणे पार्श्वे स्थित्वाद्याप्यस्माकं निमित्तं निवेदनं करोति स
३५ ख्रीष्टः किं करिष्यति? अस्माभिः सह ख्रीष्टस्य प्रेमविच्छेदं जनयितुं कः
शक्नोति? क्लेशो वा शोको वा ताडना वा दुर्भिक्षं वा वस्त्रहीनत्वं वा प्राणसंशयो
३६ वा खड्गो वा किमेतानि शक्नुवन्ति? किन्तु लिखितम् आस्ते यथा

'सर्व्वदिनं मुखे मृत्योस्त्वत्कृते वयमास्महे।
गणितास्च वयं सर्व्वे बलये नीतमेषवत्।'

३७ अपरं योऽस्मासु प्रेम करोति तेनैतासु विपत्सु जयिनोऽपि वयं जयिनो
३८ भविष्यामः। यतोऽस्माकं प्रभौ यीशुख्रीष्टे ईश्वरस्य यत् प्रेम तस्मान् मृत्यु
३९ र्वा जीवनं वा दिव्यदूता वा मुख्या बलवन्तो भूता वा वर्त्तमाना वा
भविष्यद्वा उच्चपदं वा नीचपदं वापरं किमपि सृष्टवस्तु वास्माकं विच्छेदं
जनयितुं न शक्नोति, एतादृशो दृढविश्वासो ममास्ते।

---

९ नवमोऽध्यायः।

१ यिहूदिनामर्थं पौलस्य ममस्तापः ६ इब्राहीमः सर्व्वेषु सन्तानेषु नानुग्रहत्वं १४ कर्म्मणा नानुग्रहः किन्त्वीश्वरीयेच्छानुसारादेव भवतीति कथनं १९ कुलालस्य दृष्टान्तेन विवादिन उत्तरम् ईश्वरस्य न्याय्यत्वञ्च।

१ अहं काञ्चिद् आरोपितां कथां न कथयामि, ख्रीष्टस्य साक्षात् सत्या-
मेव कथयामि पवित्रस्यात्मनः साक्षान् मदीयं मन एतत् साक्ष्यं ददाति।
२ ममान्तरतिशयदुःखं निरन्तरं खेदश्च तस्माद् अहं स्ववंशीयभ्रातृगणस्य
३ ज्ञातिगणस्य च निमित्तात् स्वयं ख्रीष्टाच्छापग्रस्तम् ऐच्छम्। यतस्ते

इस्रायेलो वंशा एतत्कारणाद् दत्तकपुत्त्रत्वं तेजो नियमो व्यवस्था- ४
दानं मन्दिरे भजनं प्रतिज्ञा पितृपुरुषस्य जनिः सर्व्वेष्वेतेषु तेषाम् अधि-
कारोऽस्ति। तत् केवलं नहि किन्तु सर्व्वाध्यक्षः सर्व्वदा सच्चिदानन्द ईश्वरो ५
यः ख्रीष्टः स शारीरिकसम्बन्धेन तेषां वंशे ऽवातरत्। इति।

ईश्वरस्य वाक्यं विफलं जातम् इति नहि यत्कारणाद् इस्रायेलो ६
वंशे ये जातास्ते सर्व्वे वस्तुत इस्रायेलीया न भवन्ति। अपरम् इब्राहीमो ७
वंशे जाता अपि सर्व्वे तस्यैव सन्ताना न भवन्ति किन्तु इस्हाको नाम्ना
तव वंशो विख्यातो भविष्यति। अर्थाद् इब्राहीम औरससन्ताना यावन्त- ८
स्तावन्त एवेश्वरस्य सन्ताना न भवन्ति किन्त्वङ्गीकारानुसारेण येषां
जनुरभवत् त एवेश्वरस्य सन्तानत्वेन गणिता भवन्ति। यतस्तदङ्गीकृतं ९
वाक्यमेतत् एतादृशे समये मय्यागतवति सति सारापुत्त्रमेकं प्रसविष्यति।
अपरमपि वदामि रिब्कानाम्ना योषिता जनैकस्माद् अर्थाद् अस्माकम् १०
इस्हाक पूर्व्वपुरुषाद् गर्भे धृते तस्या द्वयोः सन्तानयो र्भूमिष्ठितेः पूर्व्वं ११
तथा तयोः शुभाशुभकर्म्मणः करणात् पूर्व्वम् ईश्वरीयेच्छानुसारेण
यन्निरूपणं,कर्म्मणा नहि किन्त्वाह्वानकारिणा भवति,तद् यथा सिद्ध्यति १२
तदर्थं तां प्रतीदं वाक्यम् उक्तमभूत्; ज्येष्ठः कनिष्ठं सेविष्यते; यथा १३
लिखितम् आस्ते 'तथाप्येषावि न प्रीत्वा याकूबि प्रीतिमानहं।'

तर्हि वयं किं ब्रूमः? ईश्वरः किम् अन्यायकारी? तथा न भवतु। यतः १४
स स्वयं मूसाम् अवदत्; 'क्षमां कर्त्तुं यस्मै ममेच्छा जायते तमेव क्षमेऽहं १५
तथा दयां कर्त्तुं यस्मै ममेच्छा जायते तमेव दयेऽहं।' अतएव मानुषाणाम् १६
इच्छातश्चेष्टातो वा भवतीति नहि दयाकारिण ईश्वराद् भवति।
फिरौणि शास्त्रे लिखति 'त्वया यथा मम महिमा प्रकाश्यते तथा सर्व्व- १७
स्मिन् भूमण्डले स्थितानां लोकानां समीपे यथा मम नाम विख्यातं भवति
तन्निमित्तम् अहं तुभ्यम् उच्चपदं दत्तवान्।' अतोऽनुग्रहं कर्त्तुम् इच्छां १८
यस्मै करोति तमनुगृह्लाति तथा निग्रहं कर्त्तुम् इच्छां यस्मै करोति
तं निगृह्लाति।

१९ यदि वदसि तदीयेच्छायाः प्रतिबन्धं कर्त्तुं कस्य सामर्थ्यं विद्यते? तर्हि
२० स दोषं कुतो गृह्णाति? हे ईश्वरस्य प्रतिपक्षलोक त्वं कः? एतादृशं मां कुतः
२१ सृष्टवान्? इतिकथां सृष्टवस्तु स्रष्ट्रे किं कथयिष्यति? एकस्मान् मृत्पिण्डाद् उत्कृष्टापकृष्टौ द्विविधौ कलशौ कर्त्तुं किं कुलालस्याधिकारो
२२ नास्ति? ईश्वरः कोपं प्रकाशयितुं निजशक्तिं ज्ञापयितुञ्च विनाशस्य योग्यानि सर्व्वक्रोधभाजनानि प्रति यदि बहुकालं धैर्य्यावलम्बनं करोति;
२३ अपरञ्च मुक्तिनिमित्तं यान् पूर्व्वं सज्जितवान् एतादृशान्यनुग्रहपात्राणि
२४ प्रति, विशेषतः केवलयिहूदिनां नहि भिन्नदेशिनां मध्याद् आहूतान् अस्मानपि प्रति, यदि निजमहिमरूपं धनं प्रकाशयितुम् इच्छति तत्र
२५ तव किं? होशेयग्रन्थे यथा लिखितम् आस्ते

'यो लोको मम नासीत् तं वदिष्यामि मदीयकं।
यो जनो मेऽप्रियश्चासीत् तं वदिष्याम्यहं प्रियं।
२६ यूयं मदीयलोका न यत्रेतिवाक्यमौच्यत।
अमरेशस्य सन्ताना इति ख्यास्यन्ति तत्र ते।'

२७ इस्रायेलीयलोकेषु यिशायियोऽपि कथामेतां प्राचारयत्,

'इस्रायेलीयवंशानां या संख्या सा तु निश्चितं।
सामुद्रसिकतासंख्यासमाना यदि जायते।
तथापि केवलं लोकैरल्पैस्त्राणं व्रजिष्यते।
२८ यतो न्यायेन स्वं कर्म्म परेशः साधयिष्यति।
देशे सएव संक्षेपान्निजं कर्म्म करिष्यति।'

२९ यिशायियोऽपरमपि कथयामास,

'सैन्याध्यक्षः परेशश्चेदस्माकं वीजमेककम्।
अपि नास्थापयिष्यद्धि तर्हि सिदोमि पत्तने।
अमरानगरे चैव स्थितानां यादृशी दशा।
अभविष्यद्दशा नूनमस्माकमपि तादृशी।'

३० तर्हि वयं किं वक्ष्यामः? इतरदेशीया लोका अपि पुण्यानुसन्धानम्

अकृत्वा विश्वासेन पुण्यम् अलभन्त; किन्त्विस्रायेल्लोका व्यवस्थापालनेन ३१
पुण्यानुसन्धानं कृत्वा तन् नालभन्त। तस्य किं कारणं? ते विश्वासेन नहि ३२
किन्तु व्यवस्थायाः क्रियया चेष्टित्वा तस्मिन् व्याघातजनके पाषाणे
पादस्खलनं प्राप्ताः। लिखितं यादृशम् आस्ते

३३ 'पश्य पादस्खलार्थं हि सीयोनि प्रस्तरन्तथा।
बाधाकारञ्च पाषाणं परिस्थापितवानहम्।
प्रत्याशां तत्र यः कुर्य्यात् त्रपते स कदापि न।'

---

१० दशमोध्यायः।

१ यिहूदीयलोकानां व्यवस्थया त्राणप्राप्तिः केवलविश्वासेन त्राणप्राप्तिः १४ विश्वासेनान्यलोकानां त्राणप्राप्तिः, अविश्वासेन यिहूदिनां त्राणाप्राप्तिश्च।

हे भ्रातर इस्रायेलीयलोका यथा परित्राणं प्राप्नुवन्ति तथाहं १
मनसाभिलष्य ईश्वरस्य समीपे प्रार्थये। यत ईश्वरे तेषां चेष्टा २
विद्यते इत्यत्राहं साक्ष्यस्मि; किन्तु तेषां सा चेष्टा यथाज्ञानं नहि यतस्त ३
ईश्वरेण दत्तं पुण्यम् अविज्ञाय स्वतः पुण्यम् ईहित्वा, ईश्वरेण दत्तस्य
पुण्यस्य निघ्नत्वं न स्वीकुर्व्वन्ति। ख्रीष्ट एकैकविश्वासिजनाय पुण्यं ४
दातुं व्यवस्थायाः फलस्वरूपो भवति। व्यवस्थापालनेन यत् पुण्यं तस्मिन् ५
मुसा इत्थं वर्णयामास 'यो जनो व्यवस्थानुसारेण कर्म्म करोति स तेन
जीविष्यति।' किन्तु प्रत्ययेन यत् पुण्यं तद् एतादृशं वाक्यं वदति मनसीत्थं ६
मा चिन्तयत ख्रीष्टम् अवरोहयितुं कः स्वर्गम् आरोक्ष्यति? यद्वा ७
ख्रीष्टं श्मशानाद् उत्थापयितुं कः श्मशानम् अवरोक्ष्यति? तर्हि किं ८
ब्रवीति? यद् वाक्यं युष्माकं जिह्वाग्रेऽन्तःकरणे चास्ते, अर्थात् प्रत्ययस्य
यद् वाक्यं वयं प्रचारयामस्तदेव वाक्यं ब्रवीति। वस्तुतः प्रभुं यीशुं ९
यदि वदनेन स्वीकरोषि, तथेश्वरो यत् तं श्मशानाद् उदस्थापयत्
इति यद्यन्तःकरणे विश्वसिषि तर्हि परित्राणं लप्स्यसे। यस्मात् पुण्यं १०
प्राप्तुम् अन्तःकरणेन विश्वसितव्यं तथा परित्राणार्थं वदनेन स्वीकर्त्तव्यं।
शास्त्रे यादृशं लिखति 'यः कश्चित् तस्मिन् प्रत्येति स लज्जां नैव प्राप्स्यति।' ११

१२ इत्यत्र यिहूदिनि तदन्यलोके च कोपि विशेषो नास्ति यस्माद् यः सर्व्वेषां
१३ प्रभुः स निजयाचकमात्रं प्रति प्रसन्नो भवति। अतएव

'यः कश्चित् परमेशस्य नाम्ना हि प्रार्थयिष्यते।
सएव मनुजो नूनं परित्रातो भविष्यति।'

१४ यं ते न प्रत्यायन् तस्य सन्निधौ कथं प्रार्थयिष्यन्ते? तथा यस्याख्यानं कदापि
न श्रुतवन्तस्तं कथं प्रत्येष्यन्ति? अपरं यदि प्रचारयितारो न तिष्ठन्ति
१५ तदा कथं ते श्रोष्यन्ति? तथा यदि प्रेरिता न भवन्ति तदा कथं प्रचार-
यिष्यन्ति? यादृशं लिखितम् आस्ते

'माङ्गलिकं सुसंवादं ददत्यानीय ये नराः।
प्रचारयन्ति शान्तेश्च सुसंवादं जनास्तु ये।
तेषां चरणपद्मानि कीदृग्धन्यतराणि हि।'

१६ किन्तु ते सर्व्वे तं सुसंवादं ग्राह्यं न कृतवन्तः, यिशायियो यथा
लिखितवान् 'कः प्रत्येति सुसंवादं परेशास्मत्प्रचारितं।'
१७ अतएव श्रवणेन विश्वास ईश्वरस्य प्रचारितेन वाक्येन श्रवणञ्च भवति।
१८ तर्ह्यहं ब्रवीमि ते किं श्रोतुं न लभन्ते? अवश्यम् अशृण्वन् यस्मात्

'तेषां शब्दो महीं व्याप्नोद् वाक्यञ्च निखिलं जगत्।'

१९ अपरमपि वदामि इस्रायेलीयलोकाः किम् एतां कथां न बुध्यन्ते?
प्रथमतो मूसा इदं वाक्यं प्रोवाच ये मानवानां मध्ये गणिता न भवन्ति तै
र्युष्माकम् ईर्षां जनयिष्यामि तथा विवेकहीनै र्लोकै र्युष्मान् रोषयुक्तान्
२० करिष्यामि। अपरञ्च यिशायियोऽतिशयाक्षोभेण कथयामास

'मैहन्त मम तत्त्वं ये मज्ज्ञानं प्राप्नुवन्ति ते।
यैः पृष्टोपि न मेऽकारि तेभ्यात्मानं प्रकाशये।'

२१ किन्त्विस्रायेलीयलोकेषु कथयाञ्चकार

'अनाज्ञाग्राहिलोकानां साधाचापत्तिकारिणां।
हस्तमेव दिनं नूनं हस्तौ विस्तारयाम्यहं।'

११ एकादशोऽध्यायः

१ सर्व्वेषाम् इस्रायेलीयलोकानां नापाद्यत्वं ७ अमनोनीतलोकानाम् अपाद्यत्वं ११ तेषां पतनाद् अन्यलोकानां परित्रातत्वं २७ भिन्नदेशिनाम् अभिमानकरणानुचितत्वं तथा न्यायतो दयात ईश्वरस्य धन्यवादकरणोचितत्वञ्च।

ईश्वरः किं निजलोकान् पर्य्यत्याक्षीत्, अहं किम् ईदृशं वाक्यं ब्रवीमि? १
तन्न भवतु यत इब्राहीमो वंशीयबिन्यामीनो गोत्रे मम जन्म तेनाह-
मपीस्रायेलीयलोको भवामि। यान् निजलोकान् पूर्व्वम् ईश्वरो लक्ष्यान् २
अकरोत् स तान् न परित्यक्तवान्। अपरञ्च 'हे परमेश्वर लोकास्त्वदीयाः
सर्व्वा यज्ञवेदीरभञ्जन् तथा तव भविष्यद्वादिनः सर्व्वान् अघ्नन्
केवल एकोऽहम् अवशिष्ट आसे ते ममापि प्राणान् हन्तुम् अधुनापि चेष्टन्ते, एतां ३
कथाम् इस्रायेलीयलोकानां विरुद्धम् ईश्वरस्य समीप एलियो निवेद-
यामास। तस्मिन् शास्त्रे लिखिताम् एनां कथां किं यूयं न जानीथ? ततस्तं ४
प्रतीश्वरस्योत्तरं किं जातं? बाल्नाम्नो देवताया: समीपे यै र्जानूनि न
पातितानि तादृशाः सप्त सहस्राणि लोका अवशिष्टाः स्थापिता मया।
तद्वद् एतस्मिन् वर्त्तमानकालेऽपि अनुग्रहेण मनोनीतास्तेषाम् अवशिष्टा ५
लोकाः सन्ति। अतएव तद्यनुग्रहेण भवति तर्हि क्रियया न भवति ६
नो चेद् अनुग्रहोऽननुग्रह एव; किन्तु यदि क्रियया भवति तर्ह्यनुग्रहेण •
न भवति नो चेत् क्रिया क्रियैव न भवति।

तर्हि किं? इस्रायेलीयलोका यद् उद्दिशन् तन् नालभन्त ७
किन्तु मनोनीतलोकास्तद् अलभन्त तदन्ये सर्व्व अन्धीभूताः। यथा ८
लिखितम् आस्ते 'दृष्टिक्रियाहीननेत्रैः श्रवणक्रियाहीनकर्णैश्च ईश्वरोऽद्य
यावत् तेषाम् अतिनिद्रालुत्वस्वभावं घटयामास। एतस्मिन् दायूदपि ९
लिखितवान् यथा

'तेषां भद्र्यमतस्तेषामुन्माथोऽहि भविष्यति।
तेषान्तु हितकृन्नव्यं वंशयन्त्रो भविष्यति।
१० भविष्यन्ति तथैवान्धा यथा पश्यन्ति नैव ते।
कटिदेशे च तेषां वै कम्पो नित्यं भविष्यति।'

११ पतनार्थं ते पादस्खलनं लब्धवन्त एतां कथां किमहं वदामि? तन्न
भवतु किन्तु तान् उद्योगिनः कर्त्तुम् इतरदेशीयलोकैः परित्राणं प्राप्तं।
१२ तेषां पतनं यदि जगतो लोकानां लाभस्वरूपम् अभवत् तथा तेषां
ह्रासो यदि भिन्नदेशिनां लाभस्वरूपोऽभवत् तर्हि तेषां वृद्धिः कति
१३ लाभस्वरूपा भविष्यति? अतो हे अन्यदेशिनो युष्मान् सम्बोध्य कथयामि
निजानां ज्ञातिबन्धूनां मनःसूद्योगं जनयित्वा तेषां मध्ये कियतां
१४ लोकानां यथा परित्राणं जनयामि तन्निमित्तम् अन्यदेशिनां निकटे
१५ प्रेरितत्वाद् अहं स्वपदस्य महिमानं प्रकाशयामि। तेषां निग्रहेण
यदीश्वरेण सह जगतो जनानां मेलनं जातं तर्हि तेषां गृहणं मृतदेहे
१६ यथा जीवनलाभस्तद्वत् किं न भविष्यति? अपरं प्रथमजातं फलं यदि
पवित्रं भवति तर्हि सर्व्वमेव फलं पवित्रं भवति; तथा मूलं यदि शुद्धति
१७ तर्हि शाखाअपि तथैव भवन्ति। अपरञ्च कियतीनां शाखानां भिन्नात्मत्वात्
त्वं वन्यजितवृक्षस्य शाखा भूत्वा यदि तच्छाखाया मूले संलग्ना सती जित-
१८ वृक्षीयमूलस्य रसं भुंक्षे तर्हि तस्या भिन्नशाखाया विरुद्धं मा गर्व्वीः
किन्तु यदि गर्व्वसि तर्हि त्वं मूलं यन्न धारयसि किन्तु मूलं त्वां धार-
१९ यति तत्संस्मर। अपरञ्च यदि वदसि मां संयोजयितुं ताः शाखा
२० विभिन्ना अभवन्। भद्रं, अप्रत्ययकारणात् ते विभिन्ना जातास्तथा
विश्वासकारणात् त्वं संयुक्तो जातस्तस्माद् अहङ्कारम् अकृत्वा ससाध्वसो भव।
२१ यत ईश्वरो यदि स्वाभाविकशाखा न स्थापयति तर्हि सावधानो भव चेत्
२२ त्वामपि न स्थापयति। इत्यत्र ईश्वरस्य यादृशी कृपा तादृशं शासनमपि
पश्य; ये पतिता भवन्ति तान् प्रति तस्य शासनं प्रकाशितं भवति किन्तु
यदि तस्य कृपाया वशं गतः सन् तिष्ठसि तर्हि त्वां प्रति कृपा प्रकाशिता
भविष्यति; नो चेत् त्वमपि तद्वत् छिन्नो भविष्यसि।
२३ अपरञ्च ते यद्यप्रत्यये न तिष्ठन्ति तर्हि पुनरपि संयुक्ता भविष्यन्ति
२४ यस्मात् तान् पुनरपि संयुक्तान् कर्त्तुम् ईश्वरस्य शक्तिरास्ते। त्वं वन्यजितवृक्षस्य
शाखा भूत्वा रीतिव्यत्ययेन यद्युत्तमजितवृक्षे समलगस्तर्हि तस्य वृक्षस्य

स्त्रीया याः शाखाः किं पुनरपि वृचे संलगितुं न शक्नुवन्ति? हे २५
भ्रातरो युष्माकं आत्माभिमानो यथा न जायते तदर्थं ममेदृशी वाञ्छा
भवति यूयं एतन्निगूढतत्त्वम् अजानन्तो यथा न तिष्ठथ;वस्तुतो यावत्कालं
सम्पूर्णरूपेण भिन्नदेशिनां संग्रहो न भविष्यति तावत्कालम् अंशत्वेन
इस्रायेलीयलोकानाम् अन्धता स्थास्यति; पश्चात् ते सर्व्वे परित्राता २६
भविष्यन्ति; एतादृशं लिखितमप्यास्ते

'आगमिष्यति सीयोन एको यस्त्राणदायकः।
अधर्म्मं याकुवो वंशात् सतु दूरीकरिष्यति।
२७ तथा दूरीकरिष्यामि तेषां पापान्यहं यदा।
तदा तैरेव सार्द्धं मे नियमोयं भविष्यति।'

सुसंवादे ते युष्माकं विपक्षा अभवन् किन्तु मनोनीतत्वकरणे ते पितृलो- २८
कानां प्रियपात्राणि भवन्ति। यत ईश्वरस्य दानाद् आह्वानाच्च पश्चात्तापो २९
न भवति। अतएव यूयं पूर्व्वं यथा ईश्वरे ऽविश्वासिनआस्त सम्प्रति तेषाम् ३०
अविश्वासकारणाद् ईश्वरस्य कृपापात्राणि भवथ;तद्वत् इदानीं तैरविश्वासे ३१
कृतेपि युष्माभि र्लब्धकृपाकारणात् कृपां ते लप्स्यन्ते। ईश्वरः सर्व्वान् प्रति ३२
कृपां प्रकाशयितुं सर्व्वान् अविश्वासित्वेन गणयति। अहो ईश्वरस्य ज्ञानबुद्धि- ३३
रूपयो र्धनयोः कीदृक् प्राचुर्य्यं; तस्य राजशासनस्य तत्त्वं कीदृग् अप्राप्यं
तथा तस्य मार्गः कीदृग् बोधागम्यः। परमेश्वरस्य सङ्कल्पं को ज्ञातवान्? ३४
अपरं तस्य मन्त्री वा कोऽभवत्? तथा तं क उपाकरोत्? तन्निमित्तं तं ३५
प्रत्युपकरोति। यस्माद् वस्तुमात्रमेव तस्मात् तेन तत्कारणाद् अभवत् ३६
तदीयो महिमा सर्व्वदा प्रकाशितो भवतु। इति।

---

१२ द्वादशोऽध्यायः।

१ ईश्वरस्य कृपातो यथाशक्ति तस्य सेवनमुचितं ९ प्रेमादि कर्त्तुं
हिंसाकर्त्तुमुपदेशश्च।

हे भ्रातर ईश्वरस्य कृपातो युष्माकं सन्निधावहम् इति विनयं करोमि १
यूयं सजीवं पवित्रं ग्राह्यं बलिम् स्वं स्वं शरीरम् ईश्वरमुद्दिश्य समुत्-